श्रीमद्भूदेवशुक्लविरचितं

# धर्मविजयनाटकम्

राजकीयसंस्कृतपाठशाला–सरस्वतीभवनोपाध्यक्षेण साहित्याचार्य-
पदालङ्कृतेन श्रीमता नारायणशास्त्रिखिस्तेशर्मणा संस्कृतम् ।

THE

# DHARMA VIJAYA NĀTAKA

By

BHUDEVA S'UKLA

Edited with Introduction etc.

BY

SĀHITYĀCHARYA
PANDIT NÂRÂYAṆA S'ÂSTRÎ KHISTE,
Assistant Librarian, Government Sanskrit College,
Sarasvatī Bhavana Library, Benares.

1930.

॥ श्रीः ॥

# धर्मविजयनाटकस्य

## उपोद्धातः

अथेदमुपक्रम्यते 'धर्मविजयं' नाम नाटकं संमुद्य प्रकाशयितुम्। अस्य निर्माता किल प्रसिद्धो विपश्चिन्नैकनिबन्धनिर्माता श्रीमान् भूदेवशुक्लः। नाटकमिदमद्यावधि काव्यमुद्रितं धर्मविप्लवदूरीकरणोपायप्रदर्शकमिति वर्तमानकाले सम्यगुपयोगितामस्य सम्भावयता मया काव्यरसिकानां करकमलेषूपायनीक्रियते।

कान्तासम्मिततया सदुपदेशकरणमेव हि काव्यस्य मुख्यं व्यावहारिकं प्रयोजनम्। तच्च श्रव्यकाव्यापेक्षया दृश्यकाव्यद्वारा समधिकं चारुतया सम्पाद्यते इत्यप्यतिरोहितमेव प्रेक्षावताम्। पापस्य नरकजनकत्वं शतकृत्वः श्रुत्वाऽपि यावती पापपराङ्मुखी वृत्तिश्चेतसि समुदेति, तदपेक्षयाऽपि प्रबला चेतोवृत्तिः पापिनो नरके निपातम्, तत्र तस्य दुःसहक्लेशभोगित्वं सकृदपि निरीक्ष्य समुदेतीत्यनुभवो विदुषाम्। इत्थमेव सदुपदेशदानं दृश्यकाव्यद्वाराऽव्यभिचरितफलं सम्पादितं भवति। तदेव दृश्यकाव्यं नाट्यमित्यभिधीयते। महर्षिणा भरतेन साङ्गोपाङ्गस्य तस्यैव प्रपञ्चनं स्वकीये नाट्यशास्त्रे कृतम्। पश्चाद्वाविभिन्नैर्विद्वद्भिस्तदेव स्वस्वनिबन्धेषु स्वस्वबुद्धिवैभवानुसारेण विस्तरेण सप्रभेदं सोदाहरणञ्च निरूपितम्।

'अवस्थानुकृतिर्नाट्यम्' इति हि नाट्यलक्षणं दशरूपकादौ निर्दिष्टम्। अनुकरणमेव हि नाट्यम्। अनुकरणञ्च वास्तविक्या अवस्थाया एव सम्भवति, न तु कल्पितायाः। तथा च वास्तविकावस्थानुकरणं नाट्यमिति फलति। तत्र सदुपदेशकरणात्मकमुख्यव्यावहारिकफलानुसन्धानेन सत्कर्मणां शोभनं फलमसत्कर्मणामशोभनञ्च फलं कविना

नाटकेऽवश्यं निबद्धव्यं भवति । तस्यैव प्रवृत्तिनिमित्तत्वात् । एवमपि नाटकनिबन्धने न कवेः स्वातन्त्र्यम्, नापीतिहासादिवत्केवलमितिवृत्तनिरूपणमात्रेण कवेरात्मलाभः । अपि तु विविधनियमनियन्त्रितस्य तस्य भूतार्थे विपर्यासः, अन्यथाकरणम्, परिहरणम्, अभूतकल्पनञ्च यथावसरं कर्तव्यं भवति । निदर्शनान्यत्र बहूनि महाकविप्रबन्धेषु समुपलभ्यन्ते ।

यथा—अभिज्ञानशाकुन्तले महाकविना कालिदासेन मुख्यनायकस्य शकुन्तलानङ्गीकारात्मको दोषः दुर्वासःशापवृत्तान्तकल्पनया निवारितः । एवमेव महावीरचरितादिरामायणप्रबन्धसमाश्रयेषु नाटकेषु प्रच्छन्नतया वालिवधात्मको मुख्यनायकस्य रामस्य दोषस्तत्कथाया अन्यथाकरणेन प्रकारान्तरेण वा तत्तत्कविभिर्निवारितः । तत्र सामाजिकानां मनःक्षोभो मा भूत् मध्ये प्रतिकूलवेदनया रसास्वादे धाराविच्छेदश्च मा भवतु, इत्येव बीजम् ।

तथा च व्यावहारिक्यामवस्थायां मानवजातिसुलभा अपि दोषाः प्रधाननायके न निबद्धव्याः । प्रधाननायकचरितस्यैव सदुपदेशप्रदानप्रयोजकत्वात् । व्यावहारिके जगति क्वचित्पापिनोऽपि सुखिनो दृश्यन्ते, पुण्यवन्तोऽपि क्लेशवन्तः । किन्तु नाटके तावत्पापिनः सुखपरिणामित्वं नैव दर्शयितुमुचितम् । तथा क्रियेत चेत् भारतीयनाट्यशास्त्रादर्शस्यैव मूलच्छेदः प्रसज्येत ।

प्रकृतनाटकेऽपि ग्रन्थकर्त्रा धर्माधर्मौ नायकप्रतिनायकौ प्रकल्प्य तदनुकूलांश्चोर्ध्वगतिपण्डितसङ्गनिदुराचाराऽनाचारादिपरिवारांश्च कल्पयित्वा अधर्मेण धर्मस्याक्रमणं पूर्वं प्रदर्श्य पश्चाद्वृद्धपरिकरेण धर्मेण स्वपरिवारद्वाराऽधर्मस्योच्छेदः पर्यवसाने प्रदर्शितो नाटकं च समापितम् । धर्मस्य मुख्या राजधानी काशीक्षेत्रमिति विचार्य तत्रैवाधर्मस्य प्रसरणं प्रदर्शितं कविना ।

नाटकमिदं प्रायो यवनराजस्याकब्बरस्य समये प्रणीतमिति स

म्भाव्यते । तत्कालीनराजनीत्यनुसारेण हिन्दूनां यवनानां च परस्परं सौहार्दमासीत् । शृङ्गारप्राया यवनानां दुराचारास्तदानीं लोकैः सादरमनुक्रियन्ते स्म । कामोपहते चेतसि कुतः सदाचारादर इति क्रमशः सदाचारहानिरजनिष्ट । परिभ्रष्टसदाचारा एके सदाचारिणः परानसहमानास्ताननेकैर्विप्रलम्भनैः पातयन्ति दुराचारगर्ते इति तु लोकानुभवसिद्धमेव । सैवेयं दशा नाटकनिर्माणसमयेऽपि सञ्जातेति सम्भाव्यते । तस्मिन्काले केषु केषु देशेषु के के दुराचाराः प्रसृताः । कथं वा धूर्ता धर्मदम्भेन समाजे प्रविश्य तं भ्रंशयन्ति स्म । इत्येतत्सकलममुना नाटकेन सम्यगवगतं भवेत् । वर्तमानकालिकी धार्मिकी परिस्थितिरपि प्रकृतनाटकोपवर्णितपरिस्थित्या सुतरां समतां भजते । तत्र समाजेऽधर्मप्रसरणं कदा कथं च भवतीति विचार्यमाणे राजपक्षात् धर्मविषये दण्डनीतेरभावे सत्येवाधर्मप्रसरणं भवतीति प्रतिभाति । अकब्बरस्योदारा नीतिर्धर्मस्वातन्त्र्यं विचारस्वातन्त्र्यञ्च प्रवर्तयामास। अकृतबुद्धयस्तु स्वतन्त्राः सन्तोऽधर्मं यथारुचि प्रवर्तयन्ति स्म । दुराचाराणामपि यवनानामैहिकभोगसमृद्ध्यादिकं पश्यन्तः स्थूलदृशिनः सदाचारपरिपालनं व्यर्थमेव मन्यन्तेस्म। किञ्च आर्तिदशायामपि धर्मस्य स्मरणं भवतीति नियमानुरोधेनाकब्बरकाले प्रजानां सुखसमृद्धिसम्पन्नतयाऽऽर्तिकारणमपि नासीदित्यार्तिनिमित्तकस्यापि धर्मस्य तदानीमभाव एवासीत् । अकब्बरात्परं तत्प्रपौत्रस्यौरङ्गजेबस्य काले तत्कृतपीडनात्मकार्तिसद्भावात्तदानीं रामदासशिवाजीप्रभृतयोऽनेके धर्मसंरक्षकाः प्रजोद्धारकाः प्रादुरासन् । सम्प्रति तु राजपक्षाद्धर्मविषये दण्डनीतिर्नास्त्येव, प्रत्युत सर्वस्यैव धर्मविषये पूर्णं स्वातन्त्र्यम् । दुःखदारिद्र्याद्यार्तिसद्भावेऽपि नव्यशिक्षानुभावाद्धैतुकतावसाराद्धर्मस्य न स्मरणं भवति, सञ्जातेऽपि स्मरणे तत्र निष्ठा नास्ति, इति वर्तमानकाले यावान् धर्मस्य सदाचारस्य च ह्रासो दृश्यते, तावानतीते काले क्वापि कदापि नासीदिति बाढं वक्तुं शक्यम् ।

धर्मविप्लवदूरीकरणायात्र प्रदर्शिताः सत्सङ्गपुराणश्रवणाद्य उपायाः सावधानतया यथावसरं प्रयुक्ताश्चेदद्याऽपि किमपि सत्फलमेव जनयेयुः । वस्तुतो विचार्यमाणे या काऽपि सामाजिकी धार्मिकी राजनीतिसम्बन्धिनी वा व्यवस्था भवति, सा व्यवस्थापकेभ्यो भयेनैव निर्बाधं प्रचलति । किमधिकेन, भगवतो श्रुतिरपि सूर्यचन्द्रपवमानादीनां स्वस्वनियोगानुष्ठानं परमात्मनः सकाशाद्भयेनैव हेतुना निरन्तरं प्रचलितमुपदिशति । अस्त्येवेदमनुभवसिद्धं सामाजिके दैनन्दिनव्यापारे । समान एव न्यायो धर्मविषयेऽपि । शते सहस्रे वा तथाविधाः पवित्राशया द्वित्रा यद्युपलभ्येरन्, ये भीतिमन्तराऽपि नैसर्गिकेण प्रेम्णा धर्ममनुतिष्ठासन्ति । साधारणः समाजस्तु न श्रुतेराज्ञां बहु मन्यते, न लोकान्तरभावीनि नन्दनोद्यानविहरणान्यपेक्षते, नाऽपि विशुद्धज्ञानोदये दयते, केवलं राजभीत्या सामाजपुरोगभीत्या च सदाचाराननुतिष्ठति । एवमनुतिष्ठतस्तस्य तथाविधसदाचारानुष्ठानमहिम्नैव तेषु सदाचारेष्वान्तरिकी प्रीतिः सञ्जायते, अननुष्ठाय सदाचारान् स्थातुं न पार्यते । एवमसौ क्रमो वर्तते ।

प्रकृतनाटकेऽपि पर्यवसाने धर्मेण सपरिवारेऽधर्मे विनाशिते सति राज्ञो धर्मस्य विद्यया सह संलापावसरे महाभयप्रदर्शनेनैव लोकस्य हस्तगतत्वं सम्भाव्यते, इत्युक्त्वा, राज्ञा "किं तद्भयप्रदर्शनम्" इति पृष्टे विद्याया उत्तरम्—

निरये निपतन्त्यधर्मिणस्तरुगुल्मादिषु सम्भवन्त्यथ ।
पशुपक्षिषु संसरन्त्यथो मनुजानामुदरे ततः परम् ॥

तत्र च प्राक्तनकर्मयोगेन,

दुर्दर्शनाः केचन केऽपि दुर्भगास्तीव्रामयग्रस्तकलेवराः परे ।
व्यङ्गा दरिद्रा विकलास्तथेन्द्रियैर्न सङ्गताः केऽप्युपसर्गमन्थराः ॥

ततश्चैतावदाकर्णनमात्रेण सर्वेऽपि सत्रासाः पूर्वकृतदुष्कृते साशयाः सर्वथैव वैमुख्यमधर्माद्व्रजन्तस्तदनुशासनं प्रमाणयन्ति । विली-

नस्य त्वद्गातेर्नोपलभ्यते वार्तापीति" ।

एतावता भयप्रदर्शनमेव सामान्यजनस्य धर्मानुसरणे प्रवर्तकं भवतीति सिद्धमेव । तच्च भयप्रदर्शनं पारलौकिकं ऐहिकं चेत्युभयविधमावश्यकम्, धार्मिकाः समाजधुरीणा असदाचारिणो जनान् यदि समाजबहिष्कारादिदण्डैर्दण्डयेयुस्तदाऽपि तादृशदण्डभीत्या धर्मरक्षा सम्भवेत् । अत एव 'दण्डनीतिरेवैका विद्या' इत्यौशनसाः सङ्गिरन्ते । दण्डभयादेव कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते इति ।

एवमात्मका एव विचारा अस्मिन् नाटके प्रदर्शिताः । तेषां युक्तायुक्तानां तु निष्पक्षाः स्वयमेव विचारयन्तु । नाटकान्तरापेक्षयाऽत्रेदमेव वैशिष्ट्यं यदीदृशी विचारसरणिर्नान्यत्रोपलभ्यते । विधर्मीयेषु शासकेषु सत्सु राजावलम्बाभावाद्धर्मस्य या दुरवस्था भवति तामुद्दिश्यैव तत्प्रतिकारविचारोपायात्मकमिदं नाटकं यवनसाम्राज्यकालिकेन कविनोपनिबद्धम् । वर्तमानेऽपि समये यदि जनैरेतन्नाटकप्रदर्शितोपायाः शरणीक्रियेरन्, तदांशतोऽपि धर्मरक्षा सम्भवेदिति वयं बाढं विश्वसिमः

## ग्रन्थकर्तुः परिचयः

अथ प्रकृतनाटककर्तुर्भूदेवशुक्लस्य विषये यथावदधिगतमैतिह्यमुपनिबध्यते—असौ भूदेवशुक्लः पञ्चद्राविडान्तर्गतः पञ्चगौडान्तर्गतो वेति बोद्धुं किमपि द्वारं नास्ति, 'शुक्ल' इत्युपाधेर्गौडद्राविडोभयसम्बद्धत्वात् । वक्ष्यमाणप्रमाणानुरोधेन 'जम्बूसरः' स्थायितया गौडत्वमेव सविशेषं सम्भाव्यते । जम्बूसरश्च वर्तमानकाश्मीराधिपराजधानी 'जम्बू' इति प्रसिद्धस्थानं स्यात् । तथा च काश्मीरकोऽयं कविरिति सम्भाव्यते । शुकदेवपण्डित इत्येतत्पितुर्नाम । श्रीकण्ठदीक्षित इति च गुरोर्नाम । अनेन च स्वकृत 'रसविलास' नामकग्रन्थावसाने—

श्रीकण्ठदीक्षितगुरोर्ज्ञाता काव्यप्रकाशिका ।

इत्यावेदितमस्माभिर्नवं नात्र प्रकल्पितम् ॥

जम्बूसरःस्थितिजुषः शुकदेवसूरेर्भूदेवपण्डितकविः प्रथमस्तनूजः ।
तन्निर्मितो रसविलासपदाभिधेयः सन्दर्भ एष कविनां मुदमादधातु ॥

सम्वत् १७६३ इत्युक्तमस्ति ।

अस्माभिर्बडोदाराजकीयपुस्तकसंग्रहालये रसविलासस्य No 10. संख्याकं पुस्तकं दृष्टम्, तत्रावसाने लेखकेन सम्वत् १७९३ इति लेख समयो निर्दिष्टो वर्त्तते, तेन तत्समयपूर्वभावित्वमेव ग्रन्थकर्तुः सिद्ध्यति । अन्यच्च प्रकृतनाटकेऽपि स्वाश्रयदातुः केशवदासस्य दिल्लीदयितवेतनदानामात्यत्वेनोल्लेखः कृतः । हिन्दीभाषायां प्रसिद्धो ग्रन्थकारोऽकब्बरसमकालिकः केशवदास एवासौ यदि भवेत्तर्हि तदाश्रितेन भूदेवेनाऽपि वैक्रमीयषोडशशतके भाव्यमिति वैक्रमीयं षोडशं शतकमेतत्समयो भवितुमर्हति ।

आफ्रेख्टबृहत्सूचीपत्रानुसारेणैतन्निर्मिता ग्रन्था यथा–

१ धर्मविजयनाटकम् ( सम्प्रति मुद्रितम् )

२ आत्मतत्त्वप्रदीपस्तट्टीका च ।

३ रसविलासः ( अयमस्माभिः स्वरूपतो दृष्टः परिशीलितश्च )

४ ईश्वरप्रसादप्रबन्धश्रेणीका च ।

आफ्रेख्टसूचीपत्रद्वितीयभागे भूदेवशुक्लगुरुः 'राम'नामा कश्चिदुक्तः, प्रमाणं तु न किमप्युल्लिखितम् । इत्थमेतावदेव ग्रन्थकर्तुरितिहासमुपलभ्यते ।

एतत्पुस्तकमुद्रणसमाप्त्यनन्तरं राजकार्यानुरोधेन बडोदानगरं प्रस्थितेन मया तत्रत्यराजकीयसंस्कृतपुस्तकालये धर्मविजयनाटकस्य षट् पुस्तकानि सम्पूर्णान्युपलब्धानि ।

प्रकृतपुस्तकमुद्रणाय पुस्तकद्वयमादर्शत्वेन गृहीतम् । तत्रैकं 'क' संज्ञं अत्रत्य राजकीयसरस्वतीभवनपुस्तकालयस्थं सटीकमशुद्धिबहुलमादौ खण्डितञ्च । अन्यत् 'ख' संज्ञं मूलमात्रं सम्पूर्णं प्राकृतभाषारहितं

मित्रवर पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडन्यायाचार्यमहोदयकृपा- प्राप्तम् । एवमेतत्पुस्तकद्वयावलम्बेन यथामति संशोधनं सम्पादितम् । तत्र मित्रवरैः पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडैरेव प्रथमतो ग्रन्थमिमं प्रकाशयितुमहं समुद्योजितोऽवसरेऽवसरे समुचितविचारविनिमयद्वारा बाढमुपकृतश्चेति निर्व्याजहृदां सुहृदां तेषामुपकारभारे मग्नः शतशो- धन्यवादैस्तानभिनन्दामि ।

आदर्शपुस्तकद्वयसंवादकरणपुरःसरं मुद्रणीयादर्श ( प्रेसकापी ) विधानादिना भृशमुपकुर्वतोऽत्रत्यराजकीयसंस्कृतपाठशालाध्यापका- स्मत्सुहृद्वरश्रीगङ्गाधरशास्त्रिभारद्वाजान्तेवासिनः साहित्यशास्त्रि कल्प- स्य पण्डितवरप्रयागदत्तपाण्डेयमहाशयस्य सुमहत्साहाय्यमवश्यं धन्यवादार्हम् ।

अन्यैश्च यैःकैश्चिदत्र विषये यत्किञ्चिदुपकृतं स्यात्तान्सर्वानपि सादरं धन्यवादैरभिनन्द्य प्रार्थये गुणैकदृशो विपश्चितो यत्ते मानवसु- लभानि स्खलितानि क्षाम्यन्तो गुणमात्रमुपाददाना नाटकमिदमभिन- यादिना प्रचार्य सफलयेयुर्मम परिश्रममिति ।

| | | |
|---|---|---|
| गवर्नमेंट संस्कृत कॉलेज,<br>सरस्वतीभवन<br>काशी । | } | विद्वज्जनवशंवदः<br>खिस्ते-इत्युपाख्य नारायणशास्त्री |

# धर्मविजय नाटकम् ।

* मङ्गलम् *

प्रकटितनिजरूपः षोडशाराभिरामे
विधुरपि हृदयाब्जे दीपवद्दिव्यमूर्तिः ।
त्रिभुवनमिदमोतप्रोतमेवाऽस्ति यस्मिन्
स जयति जगदीशः शास्त्रसिद्धान्तगम्यः ॥ १

( नान्द्यन्ते )

सूत्रधारः—अलमति विस्तरेण । अद्य तावदाहूय समादिष्टोऽस्मि श्रीमद्दिल्लीदयितचेतनदानामात्येन महनीयचरितश्रीमहता केशवदासेन, यदद्य धर्मशास्त्रानुमार्गप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छामः, तद् भूदेवशुक्लप्रथितेन नवेन धर्मविजयनाम्ना नाटकेन सम्भावनीयेयं स्मातिमभोति । तत्सदनमुपेत्य कान्तामाहूय सङ्गीतकमनुतिष्ठामि ।

( नेपथ्याभिमुखमवलोक्य )

आर्ये ! इतस्तावत ।

( प्रविश्य नटी ) एसम्हि[1] ।

सूत्र०—आर्ये ! सन्निहितानि नेपथ्यविधिसाधनानि ? ।

नटी०—अज्जचलणप्पहावेण सव्वं जेव साहणं सज्जं, किं उण तुम्हाणं कज्जं[2] ।

सूत्र०—आर्ये ! अनुरञ्जनीयः खलु सकलधर्मकर्मरसिकः सकलशास्त्रप्रवीणः केशवदासः ।

---

१. एषाऽस्मि ।

२. आर्यचरणप्रभावेण सर्वमेव साधनं सज्जं, किं पुनर्युष्माकं कार्यम् ।

नटी०—का नु क्खु तुट्ट अम्हाणं लाहो?[1]।

सूत्र०—दारिद्र्यभङ्गः।

नटी०—कहं विअ?[2]।

सूत्र०—प्रसिद्धप्रभावो महावदान्यः खल्वसौ राजर्षिर्यः पूर्णमनोरथैरर्थिसार्थैरनिशमेवं श्लाघ्यते। यथा—

चित्तं मानसमुन्नतं करयुगं श्रीपुष्करं पद्मजा-
जन्मस्थानतया समुद्रमहिमाक्रान्तः शयो दक्षिणः।
सेतुर्धर्मकथाम्बुधेस्तव मतिस्त्वां च प्रभासं जनः
प्राप्तः केशवदास! चित्रमिह किं प्राप्नोति यद्वाञ्छितम्॥२॥

नटी०—जुज्जइ[3]।

सूत्र०—वाण्या विरोध्यति[4] रमा रमया च वाणी
तावच्च निर्वहति शाश्वतिको विरोधः।
यावन्न दर्शयति केशवदास एष
प्रेमप्रसादकरुणाकलुषं कटाक्षम्॥ ३॥

अपि च, वैन्यादिवदनुगतमप्येतन्नाममङ्गलकीर्तनं नाटकस्याऽपि सत्काव्यतामापादयति, इति युक्तमेतत्। पश्य—

सम्प्राप्तोऽनुशयं सदोत्विषयदं साकेतमात्रं नयन्
यातः केशवदास! भावमधुना रामोऽनुगृह्णाति नः।
यश्चैतन्मुखमीक्षते किल कृपादृष्ट्या च यं वीक्षते
ये चैतस्य गुणानुवादरसिकास्ते स्वर्गभाजो यतः॥ ४॥

नटी०—जुज्जइ[5]।

सूत्र०—कतमत् प्रकरणमभिनीयेनं प्रसादयामः?।

1. को नु खलु तुष्टेऽस्माकं लाभः।
2. कथमिव।                3. युज्यते।
4 अत्र 'विरोध्यति' इति प्रयोगश्चिन्त्यः।        5. युज्यते।

नटी०—णं खु एण्हिं एव्व अज्जउत्तेण भणिदं जं भूदेवमिस्स-रइदेण धम्मविजएण नाडएण एदे आराहणीएत्ति ।

सूत्र०—विजयपुरीजनवदनारविन्दात्प्राचीनोदन्तश्रवणाय दत्त-चेतसा मया विस्मृतं खलु ।

नटी०—को णु क्खु उदन्तो ।

सूत्र०—किमत्र जगतीनायकयोः पुरा सङ्गरे वृत्तमिति पृष्टः सो-ऽप्यवादीत् । इह हि, अस्मिन् संसारे,

अधर्म इव धर्मेण भूभारक्षमबाहुना ।
मध्यदेशक्षितिभुजा जितो दक्षिणभूपतिः ॥ ५ ॥

( नेपथ्ये ) आः पाप ! मूर्ख ! शैलूष ! कथमेतेषु स्वेच्छाविहा-रिषु ब्रवीषि महाराजपराजयकथाम् । यतः--

कोपाऽनृतस्तेयशरीरहिंसा-
कार्पण्यमालिन्यनृशंसभावाः ।
दुर्दान्तता ऽनिन्द्रियनिग्रहश्चे-
त्येकैकशो धर्मवधे समर्थाः ॥ ६ ॥

सूत्र०—आर्ये ! सकलमहाजनेषु प्रच्छन्ननिवासायाऽधर्मेण रा-ज्ञा समाज्ञप्तः व्यभिचारजन्मा वर्णसङ्करः पत्न्या नीचसङ्गत्या सह इत एवाऽभिवर्त्तमानो मद्वचनादुपजातक्रोध इव लक्ष्यते । तदेहि तावद-पसरावः ।

( इति निष्क्रान्तौ )

प्रस्तावनासङ्गतिः ।

१. ननु खल्विदानीमेवार्यपुत्रेण भणितं यद् भूदेवमिश्ररचितेन नाटकेनैते आराधनीया इति ।

२. को नु खलूदन्तः ? ।

( ततः प्रविशति वर्णसङ्करो नीचसङ्गतिश्च )

**वर्णस०**—(आः पापेति पठित्वा) पश्य रे वैधेय ! भरत !

बन्धूनामपि निधने निबद्धचित्तः
साधूनामपि परिपीडनेन वित्तः ।
आटोपप्रथितविवेकधैर्यलोपः
कोपश्चेद् प्रसति जनं तदा क्व धर्मः ? ॥ ७ ॥

अपि च. अनृते स्फुरति श्रद्धा कुतः स्वर्गाऽपवर्गयोः ।
श्रद्धायां च विलीनायां निर्मूलं सुकृतं हतम् ॥ ८ ॥

किञ्च. देवद्विजातिवनितायतिदुर्बलानां
गृह्णाति यत्किल कपर्दिकमप्यदत्तम् ॥
वित्ताय यद्विशसनेऽपि निबद्धचित्तं
स्तेयं सहिष्यति[1] कथं तपसः प्रभावम् ॥ ९ ॥

अपि च, यत्पक्षपातनिरताः किल रागलोभ-
द्वेषा गृहेषु गृहिणामथ पञ्चसूनाः ॥
यस्याश्च पामरजनप्रकृतिः स्वभावः
सैषा निकृन्तति कथं सुकृतं न हिंसा ॥ १० ॥

**नीचसङ्गतिः**—अज्जउत्त वराइ किवणदा धम्मस्स किं क-
लिस्संदि[2] ।

**वर्णसङ्करः**—प्रिये ! मैवम् ,

न प्रयच्छति न खादति स्वयं
पीडयत्यनुगतानपि क्षुधा ॥

१. अत्र 'सहिष्यति' इति प्रयोगश्चिन्त्यः सहधातोरात्मनेपदित्वा-त् । यद्वा, 'स एवायं नागः सहति कलभेभ्यः परिभवम्' इत्यादाविव गतिः कर्तव्या ।

२. आर्यपुत्र ! वराकी कृपणता धर्मस्य किं करिष्यति ।

दैवपित्र्यविधिबाधबन्धुरा
ज्ञास्यति क्व सुकृतं कदर्यता ॥ ११ ॥

अपि च, पूतिगन्धवसनाननोच्छल-
द्वासनाबहुलपिच्छिलाकृतिः ॥
क्व स्थितिर्भवति पुण्यकर्मणां
व्यापृता मलिनता भवेद्यदि ॥ १२ ॥

किञ्च, यः पीडयत्यनपराधमपि स्ववर्ग-
मुद्वेजयत्यपि मुनीन किमुताऽन्यलोकम् ॥
आराधने ऽप्यविरमत्कुटिलस्वभावः
सत्कर्म नाशयति सोऽपि नृशंसभावः ॥ १३ ॥

अपि च, साहसैकरसा नित्यमकृत्याय कृतोद्यमा ।
सेयं दुर्दान्तता पुंसां कृत्या धर्मविरोधिनी ॥ १४ ॥

**नीसङ्गतिः**—अज्जउत्त अणिग्गहस्सावि बलीअं खु पलाकमोत्ति सम्भावेमि ।

**वर्णसङ्करः**--प्रिये ! अस्य महिमानं वर्णयितुं वयमपि न शक्नुमो यः स्वयमगम्यागमनेऽपि निबद्धधैर्यतया धर्मं व्याकुलयति ।

अपि च, कुम्भाप्सरोधीवरजामृगीभ्यः
समाधिभाजामपि यत्प्रसूतिः ।
सोऽयं तपोविघ्नकृदिन्द्रियाणा-
मनिग्रहस्य प्रकटः प्रभावः ॥ १५ ॥

**नीचसङ्गतिः**–अज्जउत्तेण सोहणं क्खु आचलिदं यं पलिहीण-

१. आर्य ! अनिग्रहस्यापि बलीयान्खलु पराक्रमोऽस्ति, इति सम्भावयामि ।

पक्खस्स धम्मस्स पक्खवादं पलिहलिअ भट्टिणो पावस्स पक्खवादो आचलिदो ।

**नीचसङ्गतिः**—किं तुह्माणं वि एदं जेव कुलम् ।

**वर्णसङ्करः**—ननु तृतीयपुरुष एवास्माकं राज्ञो यवीयानिन्द्रियनिग्रहश्च । पश्य—

अनिग्रहादक्षगणस्य धर्मे
नष्टप्रचारे प्रभवत्यधर्मे ॥
स्त्रीषु प्रदुष्टासु महाजनाना-
मजीजनन्मां व्यभिचारपादाः ॥ १६ ॥

**नीचसङ्गतिः**—जुज्जइ, अहं वि तुह्माणं जेव उदरादो उप्पण्णा। तुह्मसङ्गेण गहसुहं अणुहवामि सव्वसुंदलीणं सीसे चिट्ठामि ।

**वर्णसङ्करः**—सर्वोप्ययं प्रभावो राज्ञो भाग्यं तातपादानाम् । यतः,

व्यभिचारप्रसक्तानां कुतो भ्राता कुतः पिता॥
कुतो गुरुः कुतोऽगम्या सर्वमेव समञ्जसम् ॥ १६ ॥

न केवलमावाभ्यां एवंविधं दाम्पत्यमनुभूयते । दृश्यते ऽन्यत्रापि क्वचित् तथा हि--

वेश्यासु सक्ताः कुलजाः कुमारा
गर्भेषु तासां जनयन्ति कन्याः ॥
कालेन तास्वेव रतिक्षमासु
मनोभवं मोहभराद्व्रजन्ति ॥ १७ ॥

१. आर्यपुत्रेण खलु शोभनमाचरितं यत्परिहीनपक्षस्य धर्मस्य पक्षपातं परिहृत्य भर्तुः पापस्य पक्षपात आचरितः।

२. किं युष्माकमपि एतदेव कुलम् ।

३. युज्यते । अहमपि युष्माकमेवोदरादुत्पन्ना युष्मत्सङ्गेन गृहसुखमनुभवामि । सर्वसुन्दरीणां शिरसि तिष्ठामि ।

नीचसङ्गतिः—सुदं मए धम्मपमुहा वि तुम्हाणं जेव कुल पसुदेत्ति[1] ।

वर्णसङ्करः—आः किमुच्यते, अस्मत्कुलप्रसूता इति । मतश्चतुर्थः कर्तृपुरुषः सर्वेषां मूलपुरुषः ।

नीचसङ्गतिः—ता विच्छरेण कहेदु अज्जो[2] ।

वर्णसङ्करः—अयमनादिनिधनो भगवान् कर्ता, तस्य च विहितक्रियायाश्च धर्मप्रधानोऽन्ववायः समजनि ।

नीचसङ्गतिः—ता किंत्ति तुम्हाणं एदारिसो विद्देसो[3] ।

वर्णसङ्करः—धर्मस्यैवापराधेन ।

नीचसङ्गतिः—को नु क्खु तस्स अवराहो[4] ।

वर्णसङ्करः— ज्ञानं तपो यज्ञविधिः प्रदान-
मेते कृतादौ सुकृतावताराः ।
एतैः समाकृष्य जगन्ति धर्मः
सन्तापयामास बलादधर्मम् ॥ १८ ॥

परिक्षीणो नृपतिरस्माकमवसरं प्रतीक्षमाणः क्वचिन्निलीय निगूढोऽवसत् । ततश्च समुपेते त्रेतावसरे ज्ञानममीमरत् ।

नीचसङ्गतिः—तदो[5] ।

वर्णसङ्करः—द्विषज्जयमनोरथोन्मथितचित्तमासीत्तप-
स्त्रिविष्टपसुखस्पृहाजनितकष्टमिष्टेर्मनः ॥
वितानमिव दानमुज्ज्वलविभूतिकामोन्नम-
त्पदानमितशेखरं विकृतवेषवर्णाकृति ॥ १९ ॥

१. श्रुतं मया धर्मप्रमुखा अपि युष्माकमेव कुले प्रसूता इति ।
२. तद्विस्तरेण कथयत्वार्यः ।
३. तत्किमिति युष्माकमेतादृशो विद्वेषः ।
४. को नु खलु तस्यापराधः ।
५. ततः ।

**नीचसङ्गतिः**—तदा ।

**वर्णसङ्करः**—ततश्च द्वापरे तपसोऽप्यासीद् दुर्विपाकः । एवञ्च,

सप्ततन्तुरभिचारदन्तुरा
दानमुद्भटयशःस्पृहाकुलम् ॥
सत्त्वसंक्षयरजःपराभव-
प्रौढरागविधुरात्मनामभूत् ॥ २० ॥

**नीचसङ्गतिः**—तदा ।

**वर्णसङ्करः**—ततोऽस्माकं दुःखैकबन्धुः कलिरेतेषु दिनेषु वर्णाश्रमाननुगृह्णाति । इदानीञ्च—

विद्याऽवद्या नो नमस्या तपस्या
मन्यो मन्युः सेवके सम्प्रदानम् ॥
इत्थंभूते सज्जने सोऽपि बिभ्य-
त्स्मृत्वा निष्ठत्यादरान्नाम विष्णोः ॥ २१ ॥

**नीचसङ्गतिः**—अज्जउत्त एवं भणामि जइ सोअरो उजेव्व रण्णो धम्मो ता तस्स विरोहे तुम्हाण मणं कहं चलेदि ।

**वर्णसङ्करः**—प्रतिपक्षचरितानुसारेण स हि धर्मशास्त्रमुल्लंघ्यैव राज्ञे द्रुह्यति ।

**नीचसङ्गतिः**—कहं सत्थेवि अत्थि एसो विचालो ।

**वर्णसङ्करः**—अथ किम् ।

**नीचसङ्गतिः**—ता एदाग्गिसाचलणकारी लोएण धम्मोत्ति कहं भणीअदि ।

१. ततः । २. ततः ।

३. आर्यपुत्र ! एवं भणामि । यदि सोदर एव राज्ञो धर्मस्तर्हि तस्य विरोधे युष्माकं मनः कथं चलति ।

४. कथं शास्त्रेऽप्यस्ति एष विचारः ।

५. तर्हि, एतादृशाचरणकारी लोकेन धर्मः इति कथं भण्यते ।

**वर्णसङ्करः**—आः क्षुद्रोऽयं जनोऽनार्यमर्यादमार्यपदं समारोपयति । कथमन्यथा—

भीष्मं गुरु सूर्यसुतं निहत्य
वृद्धं पितृव्यं तनयैर्वियोज्य ॥
युधिष्ठिरः स्वानपि घातयित्वा
धर्मावतारः प्रथितः पृथिव्याम ॥ २२ ॥

( नेपथ्ये )

आः पाप! जातिचाण्डाल! वर्णसङ्कर! कथमेवमधिक्षिपसि । विरुद्धाचारः सोदरोपि निग्राह्य एव, इति अस्माभिरपि अधर्मो दण्ड्यपदं प्रापितः । यच्च प्रलपसि, बद्धमूलानस्मानुन्मूलयितुं, तदप्याकाशसुमनोभिस्तिलान्वासयसि । यतः, प्रमादपठितेऽपि भगवन्नाम्नि सत्याञ्च भगवत्यां भागीरथ्यां कथं भवतां जीवितशङ्कापि । पश्य—

लङ्काऽलङ्कारकारागृहवसतिजुषा नाकपातालल्लोकां-
श्चक्रे यस्तीर्णशोकान् हरिसुनसखिताऽमित्रताभ्यामुपेतः ।
हेलामात्रं स्मृतोपि व्यथितकलिमलः कं न पापप्रभूता-
त्पायादायासभाराद्दशरथसदनाभूषणं दूषणारिः ॥ २३ ॥

अपि च, मदनमथनताराक्रान्तकान्तिं हसन्ती
प्रचलदमृतपारावारगौरैः पयोभिः ॥
सगरनृपसुतानां स्वर्गसोपानधारा
यदि हृदि कथमारादेति पापप्रचारः ॥ २४ ॥

अपि च, अपि पतितजनानां मोक्षमार्गैकबन्धु-
र्यदि सुरपुरसिन्धुप्रौढपाथःप्रवाहः ।
कचिदपि नित्रसद्भिः कीर्त्यते स्नानकाले
कथमिव नरकान्धुः सर्वदा स्यान्न रिक्तः ॥ २५ ॥

१. जीवितकथत्यपि पाठः
२ धर्म०

**वर्णसङ्करः**—प्रिये ! सर्वेषामस्माकमभ्यर्हिततमो वंशगोप्ता ज्येष्ठो राजा देव्योर्ध्वगत्या सह इत एवाभिवर्तते । य एषः—

स्नानोपवासविघसाशननित्यहोम-
स्वाध्यायसाधनविधिश्रमदुर्बलाङ्गः ॥
सर्वस्वमेव पितृदेवमुखे नियोज्य
क्षीणोऽपि भाति भगवानिव बालचन्द्रः ॥ २६ ॥

अपि च, मुहुर्मुहुः काममुखं निरीक्षन्[1]
भजन्नथाऽर्थस्य विधेयभावम् ॥
मोक्षेण पृष्ठेऽनुसृतः कथञ्चिद्
धृतावलम्बः परमूर्ध्वगत्या ॥ २७ ॥

अपि च, श्रीयाज्ञवल्क्यमनुदेवलविष्णुशर्म[2]-
शातातपादिमुनिनिर्मितपक्षपातः ॥
कात्यायनद्विजसुभाषितगृह्यसूत्र-
व्यादिष्टपद्धतिरपि स्वत एव पश्यन् ॥ २८ ॥

मद्वचनाच्चायमुपजातक्रोध इव लक्ष्यते । तदपसरावः ।

(इति निष्क्रान्तौ)

विष्कम्भकः ।

(ततः प्रविशति यथानिर्दिष्टो राजोर्ध्वगतिश्च)

**राजा**—(आः पापेति पठित्वा) ननु रे मूर्खाः ! अस्मद्व्यवसायमन्तराऽपि भवत्कुले कोपकन्यायाऽसूयया प्रसूता ब्रह्मद्वेष एवानायासेन भवतो नाशयिष्यति । यतः—

द्रुह्यन्ति ये ब्राह्मणपुङ्गवेभ्यो
वेदान्विवादैरपि खण्डयन्ति ।

१. अत्र 'निरीक्षमाण' इति योग्यम् । ईक्षतेरात्मनेपदित्वात् ।
२. 'शङ्ख' इत्यपि पाठः ।

निन्दन्ति विश्वेश्वरपादपद्मं
तेषां कुलं कुत्र पुनः पृथिव्याम् ॥ २९ ॥

**ऊर्ध्वगतिः**—सुदं मए तुम्हाणं सवत्तजणणीए हिअए प्प-सूदो अधम्मोत्ति[1]।

**राजा**--अथ किम्।

**ऊर्ध्वगतिः**—ता किंत्ति णाणुग्गहीअदि[2]।

**राजा**—आर्ये! नायमनुग्रहपात्रम्।

दूरं दुरोदरसुराहृतचित्तवृत्ति-
र्गुर्वङ्गनागमनलोलमतिर्नितान्तम् ॥
उद्वेजिताखिलजनः प्रथमं पुराऽसौ
हेमाऽहरद्विशसनव्यसनी द्विजानाम् ३०

तस्येदं वृत्तमालोक्य सर्वे वर्णाश्रमास्तथा।
तदाचाराः समावृत्ता बुद्धिमूलं हि सङ्गतिः ॥ ३१ ॥

**ऊर्ध्वगतिः**—एको क्खु अवराहो रण्णा क्खमीअदि ण क्खु अवराहाणां सहस्सम्[3]।

**राजा**—देवि! नायं भाजनं क्षमायाः। एवं स्मात्ताहि पूर्वमेव तावान् संघर्षो न स्यात्।

आवश्यकः परिणतौ सह येन सन्धि-
र्नो वैमनस्यमपि तस्य पुरा विधेयम् ॥
नो वा मनस्त्रुटितमेति कदापि सन्धि
ग्रन्थिं दधाति घटितं गुणवत् कथंचित् ॥ ३२

१. श्रुतं मया युष्माकं सपत्नजनन्या हृदि प्रसूतोऽधर्म इति।
२. तर्हि किं नानुगृह्यते।
३. एकः खलु अपराधो राज्ञा क्षम्यते न खल्वपराधानां सहस्रम्।

ऊर्ध्वगतिः—तदो[1] ।

राजा—ततस्ततोऽस्मदमात्यैराचारव्यवहारप्रायश्चित्तैरितस्ततो बाध्यमानः क्वापि अन्त्यजन्मसु प्रच्छन्नमवसत् ।

ऊर्ध्वगतिः—तदो[2] ।

राजा—ततश्चास्मदेकपक्षपातिभिर्मन्वत्रिविष्णुहारीतादिभिः कृताः सर्वे वर्णाश्रमाः स्वव्यापारमन्वातिष्ठन् । तदा प्रभृत्यद्यदिनं यावत्—

विप्राः षट्कर्मभाजः किल नरपतयो वर्णारक्षानुरक्ता
वैश्याः कृष्या प्रसक्ताः परिचरणविधौ व्याप्रियन्ते च शूद्राः ॥
कुर्वन्त्याम्नायपाठं पटुमतिबटवः पञ्चयज्ञान् गृहस्थाः
पाराकाद्यं वनस्थाः प्रणवजपविधिं भिक्षवो मोक्षसंस्थाः ॥ ३३ ॥

अङ्गं न दर्शयति पश्यति नान्यवक्त्रं
गेहान्न याति न च तिष्ठति दुष्टसङ्गे ॥
नोच्चैर्वदत्यपि न कुप्यति सापराधे
पत्याविमानि चरितानि कुलाङ्गनायाः ॥ ३४ ॥

ऊर्ध्वगतिः—अज्ज धण्णाओ ताओ पदिव्वदाओ महाप्पहावाओ सुणीअन्दि ताणं महत्तणं कहेदु अज्जउत्तो[3] ।

राजा—देवि ! कः समर्थः प्रभाववर्णने पतिदेवतानां, यासु कान्तमादाय चितां प्रविष्टासु,

एताः स्वधर्मनिरता मरणान्तिकेऽपि
तेजः परस्य पुरुषस्य कथं सहन्ते ॥
इत्थं विचिन्त्य विरतः पुरतः सतीनां
शैत्यं प्रयाति भगवान्किमु वीतिहोत्रः ॥ ३५ ॥

१. ततः ।     २. ततः ।

३. आर्य ! धन्यास्ताः पतिव्रता महाप्रभावाः श्रूयन्ते, तासां माहात्म्यं कथयत्वार्यः ।

ऊर्ध्वगतिः—ताणं जलणप्पवेसे को उण लाहो[1] ? ।

राजा—अविच्छिन्नप्रियसंयोगः ।

ऊर्ध्वगतिः—हुं एव्वम्[2] ।

राजा—अथ किम् ।

अधनं परिपीडितं मृतं
परिणेतारमसौ जहाति न ।
न परित्यजति प्रियोऽप्यमुं
गुणलुब्धो नु भवान्तरेष्वपि ॥ ३६ ॥

ऊर्ध्वगतिः—परलोए ताणं उण का गदी[3] ? ।

राजा—उमालोकप्राप्तिस्तस्मादनिवृत्तिश्च । यतः,

अपि दुष्कृतिनं मृतं पतिं
समुपादाय हिरण्यरेतसः ॥
विरतार्चिषि सार्चिषः पथा
समुपैतीति कथासु शुश्रुमः ॥ ३७ ॥

ऊर्ध्वगतिः—धण्णाओ ताओ एकवत्तीओ जाओ अज्जेण सलाहिज्जंति[4] ।

राजा—प्रिये ! सर्वथैव धन्यास्ता यासां माहात्म्यं शास्त्रमपि कथञ्चिद्वक्तुं न शक्नोति । अपि च,

नेत्रप्रान्तः कटाक्षं विहसितमधरो भाषितं कान्तकर्णः
कोपः स्वान्तं स्वकीयं गतिषु विलसितं वासगेहस्य भूमिः ॥
धैर्यं भर्तुश्रिताभिः स्तनयुगघनतां हारभारः सतीनां
सौन्दर्यं दीर्घशाटी कलयति वलयं मार्दवं दोर्लतायाः ॥ ३८ ॥

---

१. तासां ज्वलनप्रवेशे कः पुनर्लाभः ।
२. हुं एवम् । ३. परलोके पुनस्तासां का गतिः ।
४. धन्यास्ता एकपत्न्यः, या आर्येण श्लाघ्यन्ते ।

ऊर्ध्वगतिः—तदो[1] ।

राजा—द्रव्येषु शुद्धिरधिका कनकादिदानं
पात्रेषु कर्मसु यजिगणनायकस्य ॥
नान्दीमुखादिपितृकर्म नभश्चराणां
पूजेति शर्मकलितः फलितश्च वेदः ॥ ३९ ॥

ऊर्ध्वगतिः—तदो[2] ।

राजा—ततश्च त्रेताद्वापरयोः सन्धौ कदाचिदविनयमाचरन् चारमुखादवगतोऽपि दुर्बल इत्युपेक्षितोऽस्माभिः । वर्णाश्रमनिगूढपक्षपातेन कलिबलेन चैतावतीं भूमिं यातः । पुनस्तथावृत्त एव संवृत्तः ।

ऊर्ध्वगतिः—हत्थगतं पडिवक्खं को णु क्खु परिच्चजइ[3] ।

राजा—कस्येदं कर्मणः फलम् ।
ऋणस्य शेषः प्रतिपक्षवंशो
वह्नेः स्फुलिंगः फणिनः शिशुश्च ।
यैः स्थापितः कोमलबुद्धिभाजां
स्वप्नेऽपि तेषां कुशलं कुतः स्यात् ॥ ४० ॥

ऊर्ध्वगतिः—अज्जउत्त जइ एदेसु दिणेसु स संवादिदपक्खवादो, अज्जो उण पहीणपक्खवादो, ता कहं विअ स दुव्विणीदो तुम्हेहिं जेदव्वो ।

राजा—देवि ! अलमस्मान्कृशानप्यधर्मापेक्षया दुर्बलान्संभाव्य, तेजस्विनां तेज एव जयति शत्रून्नोपकरणानि कलेवरं वा ।

१. ततः ।
२. ततः ।
३. हस्तगतं प्रतिपक्षं को नु खलु परित्यजति ।
४. आर्यपुत्र ! यदि एतेषु दिनेषु स संपादितपक्षपातः, आर्यः पुनः परिहीनपक्षपातस्तत्कथमिव स दुर्विनीतः युष्माभिर्जेतव्यः ।

आस्तां नु पीवरतनुर्मदमन्थरो वा
दन्तावलोऽपि जगतां धरगह्वरेषु ॥
स्वेच्छाविहाररसिकः किल नाभ्युपैति
यावत्कृशोऽपि दृशि केसरिणः किशोरः ॥ ४१ ॥

अपि च, आस्तां तावद्भवनकुहरे कोऽपि गाढान्धकारः
स्वल्पोऽप्येकः प्रभवति पुनस्तं निहन्तुं प्रदीपः ॥
भूयाद् भूयो भुवि दवतृणं भूरुहाणाञ्चयो वा
स्वाहाभर्तुस्तदपि दहति प्रायशो विस्फुलिङ्गः ॥ ४२ ॥

**ऊर्ध्वगतिः**—अज्जउत्त बलीअं क्खु एसो, जदो कामक्कोह-लोहप्पहुदिहिं तस्स वल्लहेहिं किदोवजावो अयं जणो णं जेव्व कामेदि ण उण तुम्हाणम्[१] ।

**राजा**—देवि ! आपातमनोहरेन्द्रियलालनेन तस्य विधेय-भावमुपगतोऽप्ययं लोकः कर्मविपाकद्वाराऽस्माभिरुपजप्तः परिणतौ नरकवेदनयोद्विजितः त्यक्ष्यति पापसंसर्गम् । किञ्च स्वप्रयोजनपरः क्व पुनरुपकर्तुरत्याहिते सहायोऽपि । यतः—

गीर्वाणाः सुधया ऽसुरा मदिरया पाथोधरैर्मानवाः
सर्वे स्वार्थपरायणा जडतयैकेनामुना पोषिताः ॥
पाणावाचमतो निधाय जलधिं यादोमहीध्रैः समं
नो मित्रावरुणात्मसंभवमुनेः कोऽप्यन्तरायोऽभवत् ॥ ४३ ॥

तथापि प्रवृद्धस्य रिपोरुपचारः सत्वरं विधेयो विजिगीषुणेति प्रेषयामस्तावत्तीर्थायतनपुरपत्तनारण्यपर्वतक्षेत्रेषु पुराणश्रवणादीन् ।

( नेपथ्ये )

भर्तुर्भव्याय भवतात् सन्ध्या मध्यन्दिनवर्तिनी ।

---

१. आर्यपुत्र ! बलीयान्खलु एषः । यतः कामक्रोधलोभप्रभृतिभिस्तस्य वल्लभैः कृतोपजापोऽयं जनः एतमेव कामयते न पुनर्युष्मान् ।

राजा—किं संवृत्तोऽयं घस्रमध्यः ?

( पुनर्नेपथ्ये )

सम्प्रति हि—

दिशः शून्याकाराश्चपलमृगतृष्णामयजलाः
समन्तोऽप्यास्तेऽयं जननयनकोपस्य विषयः ॥
पयः क्वाथीभावं व्रजति सरसि स्वल्पसलिले
प्रचण्डो मार्तण्डस्तपति जगतामेष शिरसि ॥ ४४ ॥

राजा—(अवलोक्य) तरुणतरतरणिकरजनितक्लेशेव तनुतामुपैति छाया जनानाम् । त्वरिततरमुदयगिरिवरशिखरपारमराम्बरसरणिसमारोहणपरिश्रमादिव मिहिररथतुरगाः स्थिरतामुपयान्ति गगनमध्ये ।

( पुनर्नेपथ्ये )

दर्पेण स्वेन सौरैरपि करनिकरैर्वैनतेयातिकष्ट-
व्यावल्गद्वल्गुवल्गोत्फणफणिगरलज्वालयाध्मायमाणाः ॥
व्यात्तैर्वक्त्रैरुराभिर्घनघनजघनैः फेनजालं क्षरन्तो
मध्ये व्योम्नः कथञ्चिद्विदधति विरतिं सप्तयः सप्तसप्तेः ॥ ४५ ॥

अहो ! वैषम्यमस्य समयस्य । यतः—

छायामप्युपकारिणीं विटपिनः स्वामात्मसात्कुर्वते
शैत्यं दुर्बलतां गतश्च सलिलैरन्तः क्वचित्स्थाप्यते ॥
कान्ताभिः कुचमण्डलं मलयजक्षोदेन सङ्गोप्यते
मध्याह्ने पवनोऽपि वीजनपरैरन्तर्हितो लक्ष्यते ॥ ४६ ॥

राजा—तद्वयमप्याह्निकशेषेण स्नानतर्पणादिना समयमशून्यं कुर्मः ।

( इति राज्ञा सह निष्क्रान्ताः सर्वे )

इति श्रीमच्छुक्रभूदेवविरचिते धर्मविजयनाम्नि नाटके प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः ।

( ततः प्रविशति व्यभिचारः )

**व्यभिचारः**—आज्ञप्तोऽस्म्यधर्मेण, 'वत्स ! व्यभिचार ! प्रथमे तीर्थे पार्वतीप्राणनाथपुरे दृष्टिरागवनितया परस्परप्रीत्या सह गार्हस्थ्यमुपभुज्यताम् । चरितञ्च भवतो विलोक्य कुलीनतरुणीतरुणैरपि स्वेच्छाविहारिभिर्भवितव्यम्' इति । तदिदानीं प्राप्तं मयाऽऽनन्दवनम्, सम्पादिताऽऽज्ञा राज्ञो, विषयभावं नीतश्चात्रत्यः सर्वोऽपि जनः । यतः—

काचित्कान्तं परमभिसरत्यात्मना वित्तकामा
दूती काश्चिन्नयति विविधैश्छद्मभिः सम्प्रलोभ्य ॥
काचित्कर्तुं व्रजति सफलं जारसङ्गाद्वयः स्वं
काचिद्वन्ध्या प्रतिमठमटत्याकुला पुत्रहेतोः ॥ १ ॥

अपि च, एकत्रैके निवासादविदितचरिताः संश्रयन्त्यन्यकान्ता
भूत्वा मित्राणि भर्तुर्विलसितमपरे तस्य दारैर्भजन्ति ॥
केचिद्वाणिज्यदंभात्परिचरणमिषात्केऽपि धर्मोपदेश-
व्याजात्केचित्परेषां शरणमुपगताः कामिनीः कामयन्ते ॥२॥

अपि च, वाटीविभूषणमनर्घ्यमुदारशाटी
पाटीरकुंकुमविलेपनमन्यदाराः ॥
तीव्रा सुरा कुसुमपल्लविनी च शय्या
स्वर्गोऽयमेव नरकः क नु केन दृष्टः ॥ ३ ॥

( सविमर्षञ्च ) किन्नु खलु जनताचरितानि परीक्षितुं प्रहिता चिरयति परस्परप्रीतिः ।

( पुरोऽवलोक्य ) अये अभ्युपेतैव प्रियसखी ।

( ततः प्रविशति परस्परप्रीतिः )

**परस्परप्रीतिः**—अत्तणो अपुव्वाविणअं मित्तस्स पुलो कहं णु भणिस्सं किं णु कलिस्सं कहं विअ अङ्गाइं दंशइस्सं कहं वा एदं कम्म

होदित्ति मे हिअअं कंपिदं, दाणिं उण णं पाडिच्चजिअ लोअवुत्तन्तपेक्खणकज्जेण अट्ठिराचित्ताए वि मम जुआइं विअ दिणाइं संवुत्ताइं (इत्युपसर्पति)

व्यभिचारः—(सहर्षम्) एहि प्रिये ! तावदालिङ्गस्व .

(परस्परप्रीतिस्तथा करोति)

व्यभिचारः—(स्वगतम्)

त्रुट्यत्कूर्पासहारं विदलितवलयं विश्लथं नीविबाढं
प्रौढप्रेमातितिर्यग्विचलितनयनं गाढमालिङ्गितायाः ॥
उच्छ्वासोत्तालवक्षोभवदृढघटनादेति नव्यां महीया-
नङ्गप्रत्यङ्गसङ्गादनुभवपदवीं कोऽपि शर्मातिरेकः ॥ ४ ॥

(प्रकाशम्, दृढं परिष्वज्य) प्रिये ! कः खलु पौरवृत्तान्तः ? ।

परस्परप्रीतिः—किं ण आलोएदि अज्जो सअलं जेव्व णअलं अज्जउत्तस्स वसंवदं विअ दीसेइ ।

व्यभिचारः—पश्य कौतुकमितो वीक्ष्याम्—

प्रौढः पीवा विमलवसनः स्निग्धदृष्टिः शिखावान्
सायं प्रातः प्रविशति गृहं होमकर्मच्छलेन ॥
भिक्षां कर्तुं मखविधिमिषात्संस्थितस्य प्रवासे
भुक्त्वा कान्तां व्रजति कपटादाहिताग्नेर्द्विजस्य ॥ ५ ॥

अपरतश्च, पीतमम्बरयमन्यकान्तया
वीक्ष्य मुग्धमधरं नतभ्रुवा ।

---

१. आत्मनः अपूर्वाविनयं मित्रस्य पुरः कथन्नु भणिष्यामि, किन्नु करिष्ये, कथमिवाङ्गानि दर्शयिष्ये, कथं वेदं कर्म भवतीति मे हृदयं कम्पितम् । इदानीं पुनरेनं परित्यज्य लोकवृत्तान्तवीक्षणकार्येणा स्थिरचित्ताया अपि मम युगानीव दिनानि संवृत्तानि ।

२. किमालोकयति आर्यः । सकलमेव नगरं आर्यपुत्रस्य वशंवदमिव दृश्यते ।

चुम्बितुं त्वरितयापि केवलं
कान्तकान्तवदनं विलोक्यते ॥ ६ ॥

अन्यतश्च, स्वेदः कपोले श्लथता दुकूले
किमेतदित्यालिगिरं निपीय ॥
दरानमत्कन्धरबन्धुराङ्गी
तूष्णीं कुरङ्गीनयनेयमास्ते ॥ ७ ॥

**परस्परप्रीतिः**—अज्ज पलिक्कमणेसु देवप्पासाआणं अवगाहनेसु तित्थाणं कहाप्पसङ्गेसु पोलाणिआणं उज्जाणिआसु धम्मप्पउत्ताणं पलिक्खणं वि तुम्हलोअणदंसणमेत्तकेण पलिक्खिअ पहुवीतलम्मि तुए जेव्व रज्जं करीअदित्ति संभावेमि ।

**व्यभिचारः**—सत्यं, सकृदप्यस्मद्दर्शनग्राहिणो भजन्ति भक्तदासभावम् । विशेषतश्चायमुन्मादजनको मधुमासः ।

निश्वासैः सममेधते मलयजो वायुर्दिनं दीर्घतां
संतापेन सह प्रयाति कृशतामङ्गैः समं शर्वरी ॥
पत्राणि प्रपतन्ति लोचनजलैः सार्धं वसन्तागमे
निर्गच्छन्ति वियोगिनां प्रतिवनं प्राणैः समं पल्लवाः ॥ ८ ॥

प्रिये ! तस्य तुरीये वयसि कृतोद्वाहस्य धनपालनाम्नो नाणकपरीक्षकस्य पुष्पवती नाम वनितैतेषु दिनेषु किमाचोरा ? ।

**परस्परप्रीतिः**—ताए वि णिच्चं दह पंच जुआणा अणुरंजीअँदि

**व्यभिचारः**—किमसावसती संवृत्ता ?

१. आर्ये ! परिक्रमणेषु देवप्रासादानां अवगाहनेषु तीर्थानां कथाप्रसङ्गेषु पौराणिकानामुद्यानिकासु धर्मप्रवृत्तानां परीक्षणमपि युष्मल्लोचनदर्शनमात्रकेण परीक्ष्य पृथिवीतलमध्ये त्वयैव राज्यं क्रियते इति संभावयामि ।

२. 'किमाचचार' इति 'ख' पुस्तके पाठः ।

३ तयापि नित्यं दश पञ्च युवानोऽनुरज्यन्ते ।

परस्परप्रीतिः—ण क्खु अच्चरिअं।

खज्जई पिज्जई मिट्ठं ठ्ठरो प्पई ज्जोवणं विसमम्।
णिक्किवहिअओ मअणो को अवराहो से वराईए॥ ९॥

व्यभिचारः—सर्वमेतत्सुकृतं धनमात्रमालोक्य कन्यां प्रदातुः।
अपि च—

पलितदलितवालः शुष्ककङ्कालजाल-
श्चलितगलितदंष्ट्रादन्तमालाकरालः॥
लपनतरललालाश्वासहिक्काजटालो
न भवति सुमुखीनां भोगयोग्यश्रितांशः॥ १०॥

पश्य तावन्नूनोऽपि सदनमसंभावयतः कलत्रं प्रतिदिनमुपपतिं श्रावयति। यथा—

कान्तः शेते विपणिशरणे स्वीयगेहे ननान्दा
श्वश्रूर्मन्दा करणविकला क्वापि सौधस्य कोणे॥
वाणिज्याय श्वशुरचरणाः पर्यटन्ति प्रवासे
दैवाच्चौरः प्रविशति गृहं कस्तदा नः सहायः॥ ११॥

परस्परप्रीतिः—अज्ज णं क्खु असमत्थेहि णादो वि दुव्विणओ अदिढहिअअस्स भयं उप्पादेई।

व्यभिचारः—एवमेतत्। पश्य—

कोऽप्येककार्की धनिकजरठः स्वां वधूमन्यसक्तां
दृष्ट्वा दण्डादपि नरपतेः साहसाच्चैव वध्वाः॥

१. न खलु आश्चर्यम्—
खाद्यते पीयते मिष्टं स्थविरः पतिर्यौवनं विषमम्
निष्कृपहृदयो मदनः कोऽपराधोऽस्या वराक्याः॥
२. आर्य! न खल्वसमर्थैर्ज्ञातोऽपि दुर्विनयोऽदृढहृदयस्य भयमुत्पादयति।

विभ्यत कोपाकुलितमतिरप्यप्रगल्भो नियन्तुं
निन्दत्येवं निजपरिणतिं केवलं दीर्घमायुः ॥ १२ ॥

( सविमर्षम् ) अहो नु चरितमविनयवतीनाम्--

एताः प्रसन्नमनसः परकीयपुंसा
क्रीडन्ति दैववशतोऽनुचिते प्रवृत्ते ॥
मां वक्ति नर्मवचनं वसनाञ्चलं मे
गृह्णाति कोऽयमिति तञ्च विडम्बयन्ति ॥ १३ ॥

अपि च, उन्मादयन्त्यपि कटाक्षसटाप्रसारै-
र्निर्भर्त्सयन्ति वनिताः कुतुकात् पुमांसम् ॥
दीर्घावगुण्ठनतिरोहितवक्त्रचन्द्रा
भावं कदाप्यभिनयन्ति पुनः सतीनाम् ॥ १४ ॥

अपि च, एतासु विपरीतरतोत्सुकासु-
सहसैव कम्पमुपयान्ति भूधरा·
श्चलतीन्दुमण्डलमथो मुहुर्मुहुः ॥
तरलीभवन्ति गगनेऽपि तारका-
स्तपसा जितं जितमहो मनोभुवः ॥ १५ ॥

( पुरोऽवलोक्य )

कुतो धौतं वासः पचनविधिपात्राण्यपि कुतो
न पानीयं पातुं वहति करकं मृण्मयमपि ॥
स्पृशन् गावः श्वानं श्वपचमथ विप्रं समतया
विदेशेऽप्येकाकी भ्रमति किल कोऽयं द्विज इव ॥ १६ ॥

**परस्परप्रीतिः**—वअस्स कोपि पच्छात्तियो विअ बह्मणो दसिई एसो ।

**व्यभिचारः**—सत्यम्, प्रयागमार्गेणागतः पाश्चात्य एव, तदस्मा-

१. वयस्य ! कोऽपि पाश्चात्य इव ब्राह्मणो दृश्यते एषः ॥

द्वत्सस्यानाचारस्य वृत्तान्तं कलयिष्यामि । सिन्धुप्रान्तकाश्मीरकुरुक्षेत्रादिषु तेन किं सम्पादितमिति ।

**परस्परप्रीतिः**—ऐसो वि तुमं पेक्खिअ इदो ज्जेव आअच्छेदि[1] ।

**व्यभिचारः**—तदेहि द्वारवेदिकायामुपविशावः ।

( इत्युपवेशनं नाटयतः )

( ततः प्रविशति यथानिर्दिष्टो ऽनाचारः )

अहो शास्त्रसंगतिमन्तरेण पशुकल्पः पाश्चात्यो वर्णः सर्वोऽपि मया ऽनायासेन स्वाधीनतां नीतः । अपि च—

विश्वामित्रः श्वपलमहरत्पार्वतीशः कपालं
धत्ते, विष्णुर्मधुरबदरं भिल्लदष्टं चखाद ॥
लोपामुद्रासहचरमुनिर्वित्तलोभेन मांसं
वातापीयं, कथमिह पुनः पामराणां विवेकः ॥ १७ ॥

( गङ्गां दृष्ट्वा सविनयम् )

नास्त्यार्द्रीकरणाय वस्त्रमधिकं शीतं तथा बाधते
न स्नाने ऽभिरुचिर्न चान्त्यजजनस्पर्शे मम व्यग्रता ॥
अस्नातं किल नात्र कोऽपि सहमा मां पश्यति प्रायश-
स्तस्माज्जह्नुसुते मया विरचितो दूरादयं तेऽञ्जलिः ॥ १८ ॥

( अन्यतः पश्यन् ) अहो मूर्खब्राह्मणस्याचारः । यथायम्—

सुस्नातं श्रितनवधौतपट्टवस्त्रं
स्पृष्टोऽसाविति पृथुकं निहन्ति यष्ट्या ॥
चण्डालः स्पृशति मुहुर्विनिन्द्यकर्मा
क्रोधो मामिति किल नानुसन्दधाति ॥ १९ ॥

( पुनरन्यतो गत्वा ) एते तावत्—

स्नात्वोपालिप्तभुवि कम्बलखण्डसंस्थाः
पट्टांबराणि परिधाय जपन्तु नाम ॥

---

१. एषोऽपि त्वां प्रेक्ष्येत एवागच्छति ।

एषामपानविवरं रचितं विधात्रा
जन्मप्रभृत्यथ कथं शुचयः स्युरेते ॥ २० ॥

(पुरोऽवलोक्य) अये, कोऽप्ययं द्वारवेदिकायामुपविष्टः शिष्ट इव दृश्यते, तदहमप्येतादृश एव भवामि । यतः,

स्मार्तः स्मार्तेषु विष्णोः स्मरणविधिपरो वैष्णवानां समाजे
शैवः शैवेषु शक्तेः परिचरणरतः शाक्तमार्गस्थितेषु ॥
तत्तद्धर्माभिसन्धि स्वयमपि सहसा संश्रितः कूटबुद्ध्या
सोऽहं लब्धावकाशोऽतिथिरनयजुषां दांभिकानां गृहेषु ॥ २१ ॥

(आकाशे)

भो भो धनिकाः !

अयाची श्रोत्रियश्चाऽस्मि भुज्यते स्वत आगतम् ॥
अद्यापि न प्रसिद्धोऽत्र तेनाहं मलिनः कृशः ॥ २२ ॥

(कर्णं दत्वा) किमुच्यते, गृह्यतामिदमनाहतं वस्त्रद्वयं परिधानाय प्रावरणाय चेति ।

**अनाचारः**—भवतु, को विरोधो यद्ययाचितमुपतिष्ठतीति ।

(परिधाय परिक्रामति)

**व्यभिचारः**—प्रिये ! नायं पाश्चात्यः, किन्तु मध्यदेशीयः कोऽपि स्नातकः ।

**परस्परप्रीतिः**—दीसइ[1] ।

**अनाचारः**—(उपसृत्य) स्वस्ति भवतु ते ।

**व्यभिचारः**—नमो भगवतेऽभ्यागताय ।

**परस्परप्रीतिः**—भअवं पादवंदनं करेमि[2] ।

**अनाचारः**—असंख्यपतिपुत्रिणी भव ।

**व्यभिचारः**—प्रिये ! कल्प्यतां पाद्यं मधुपर्कञ्च ।

१. दृश्यते ।
२. भगवन् ! पादवन्दनं करोमि ।

परस्परप्रीतिः—वअस्स जइ ण लूससि ता एदस्स पलिक्खं करेमि।

व्यभिचारः—किम्प्रयोजनम् ?।

परस्परप्रीतिः—जई एसो सच्चसोत्तिओ जेव्व ता अह्माणं सुहाविरोहं करिस्सदित्ति अम्हघरे से वसई ण हुविस्सदि जई अम्हसरिसो होदि ता अम्हेहि सद्धं चिरं विहलिस्सदित्ति।

व्यभिचारः--भवतु का नाम हानिः।

परस्परप्रीतिः-(स्वगतम्) केण उण उवाएण णं पलिक्खिस्सं! होदु ताव, वक्कमेण अञ्जदाचारं कदुअ से मणं पाविस्सम्।

(प्रकाशम्—वदनार्धप्रविष्टेन पात्रेण पानीयमार्पाय पीतशेषम्)

एदं पाओदअं गहेदु अज्जो।

अनाचारः--युष्मत्पीतशेषेणाऽनाचारः खलु पाद्यविधिः।

व्यभिचारः--भगवन्नैतदेवम्। गुर्जराः पीतशेषं पयः सोमकल्पं कल्पयन्ति।

अनाचारः--दृष्टमेतदन्यच्च।

स्नान्ति द्वित्राः प्रातरुत्थाय केचित्
भोज्यं भोक्तुं सावकाशात्परं च।
दैवं पित्र्यं चानुतिष्ठन्ति वर्णा-
श्चर्माम्भोभिर्मण्डले गुर्जराणाम् ॥ २२ ॥

१. वयस्य! यदि न रुष्यसि तर्हि एतस्य परीक्षां करोमि।

२. यद्येष सत्यश्रोत्रिय एव तर्ह्यस्माकं सुखाविरोधं करिष्यति, अस्माकं गृहेऽस्य वसतिर्न भविष्यति। यद्यस्मत्सदृशो भवति तर्ह्यस्माभिः सार्धं चिरं विहरिष्यति।

३. केन पुनरुपायेनैनं परीक्षिष्ये। भवतु तावत्क्रमेणाज्ञानाचारं कृत्वास्य मनः प्रवेक्ष्यामि।

४. इदं पादोदकं गृह्णात्वार्यः।

व्यभिचारः—स्पृष्टाधरपात्रेण पानीयपानमपि प्रकारो मध्यदेशीयानाम् ।

अनाचारः—खादन्तीज्यामन्तरेणापि मांसं
विन्ध्यस्याद्रेरुत्तरस्यां द्विजेन्द्राः ।
आवृद्धं चाबालमास्वादयन्ति
प्रायः प्रीत्या दाक्षिणात्याः पलाण्डुम् ॥ २३ ॥

व्यभिचारः—ब्रह्मन्नभिज्ञोऽसि देशाचाराणां, तत्राभीरमालवादिषु कः सदाचारः ? ।

अनाचारः—त्रैवर्णिकानां मरुमालवादि-
देशस्थितानामविवेकभाजाम् ॥
न भक्ष्यशुद्धिर्न च शौचबुद्धि-
स्तत्राऽलमाचारविधेर्विचारैः ॥ २४ ॥

व्यभिचारः—महाश्रोत्रिय ! समांसो मधुपर्क इति गृह्यकारमतम्, यद्यभिमतं तर्हि तथैवोपचरामि ।

अनाचारः—कलिवर्ज्ये प्रथमपठितमेतत्, परन्तु यथा रोचते तुभ्यम् ।

व्यभिचारः—(स्वगतम्) अनाचारोपजस्यैव द्विजन्मनश्चरितम् । (प्रकाशम्) भगवन् ! देवरापत्यमपि कलौ गर्हितं श्रूयते ।

अनाचारः—अस्ति स्मृतिः-अग्निहोत्रमित्यादि, परन्तु निर्मूला, कथमन्यथा सन्यासोऽपि ।

व्यभिचारः—(निपुणन्निरूप्य) किं वत्स ! अनाचारस्त्वम् ? ।

अनाचारः—(सहर्षम्) किमार्यः (इति पादयोः पतति)

व्यभिचारः—वत्स ! दर्शनक्षणएव प्रत्यभिज्ञातोऽपि कालविप्रकर्षेण न सम्यक्परिचितोऽसि । (इत्युत्थायालिङ्गति)

परस्परप्रीतिः—एंदु दाव अंअवालिं वच्छो देअरो।

( अनाचारस्तथा करोति )

**परस्परप्रीतिः**—(स्वगतम्) पंलपुलिसो इत्थिआणं वड्ढइ सुह-साहणरसिओ। तत्थ वि पाहुणिओ देअरो जइ रहंमि हत्थगदो होइ।

**अनाचारः**—( आत्मगतम् )

स्त्रियः सन्तु स्वीयाः सुरतचतुराः काञ्चनरुचो
भवन्तु स्वाधीना जगति परकीयाः प्रतिदिनम्॥
तथापि प्रोन्मीलद्बहुलतररागाकुलहृदां
परीरम्भोऽगम्याजनविरचितः कोऽपि सुखदः॥ २५॥

**व्यभिचारः**—वत्स! उचित खलु समयेऽभ्यागतोसि, यदत्र परमप्रियां भैरवीं यातनामुपभोक्तुकामो राजाप्यायातीति श्रूयते।

**परस्परप्रीतिः**—( स्वगतम् ) जइ एसो हत्थगदो भविस्सदि ता णाभिप्पदंसणत्थणोल्लासणचिउरसंखरणतिरिअदिट्ठिपेक्खण महुरालावणिक्कारणहासिदणिज्जणप्पदेसमट्ठाणपुत्तमुहचुंबणादिहिं णिअवेहव्वं पारइस्समं।

( नेपथ्ये )

भो भो नागराः! प्रत्यासन्नो भूपतिरधर्मः। तथा हि--

भेरीणां प्रतिगमितप्रचण्डशब्दाः
श्रूयन्ते दिनकरमावृणोति रेणुः॥

१ एतु तावदङ्कपालिं वत्सो देवरः।

२. परपुरुषः स्त्रीणां वर्धते सुखसाधनरसिकः। तत्रापि प्राघूर्णिको देवरो यदि रहसि हस्तगतो भवेत्।

३. यदि एष हस्तगतो भविष्यति तर्हि नाभिप्रदर्शनस्तनोल्लासनचिकुरसंस्करणतिर्यग्दृष्टिप्रेक्षणमधुरालापनिष्कारणहसितनिर्जनदेशसंस्थानपुत्रमुखचुम्बनादिभिर्निजवैधव्यं पारयिष्ये।

४. 'अन्यरागाः' इति 'ख' पुस्तके पाठः।

आश्चर्यं किल पिदधाति भूविभागान्
दृश्यन्ते गजपतिकेतवो विचित्राः ॥ २६ ॥

तेन हि-

आलभ्यन्तां विविधपशवः संस्क्रियन्तां गृहाणि
द्यूतक्रीडा भवतु भवने भाग्यभाजां समन्तात् ॥
आहूयन्तां तरुणगणिकाः कल्प्यतां पानभूमिः
प्रत्यानेतुं व्रजतु सकलः पौरलोको नरेन्द्रम् ॥ २७ ॥

अनाचारः—समागत एव देवस्तत्प्रत्युद्गमनेन सम्भावयत्वार्यः ।

व्यभिचारः—प्रिये ! वाङ्मनःकायकर्मभिस्ते समुचितो देवरोपचारः

( इति निष्क्रान्तः )

( पुनर्नेपथ्ये )

स्कन्धे करं निवेश्याथ नगराद्बहिरादरात् ॥
काश्यामधर्मो नृपतिः पौरकार्यं समीक्षते ॥ २८ ॥

परस्परप्रीतिः—एहि जोव्वणलच्छीविच्छुरिदमुहचन्द देअर सुरालसेण पढमं तुमं संतोसिअ पच्छा उवचरिस्सम्[१] ।

अनाचारः—अये !

समाक्रान्तस्य सुरया कृत्याकृत्यमजानतः ॥
पुरश्चपलचित्तस्य स्थातुं शक्यं त्वया कुतः ॥ २९ ॥

परस्परप्रीतिः—अहं वि महुवारस्स विहेअत्तणं उवगदा रअणिं वा दिणं वा ण जाणामि, किं उण तुअ चरिदम्[२] ।

अनाचारः—एहि तर्हि स्वेष्टं साधयावः ।

( इति निष्क्रान्तौ )

॥ विष्कम्भकः ॥

१. एहि यौवनलक्ष्मीविच्छुरितमुखचन्द्र ! प्राघूर्णिक ! देवर ! सुरालसेन प्रथमं त्वां सन्तोष्य पश्चादुपचरिष्यामि ।

२. अहमपि मधुवारस्य विधेयत्वं प्राप्य रजनीं वा दिनं वा न जानामि । किं पुनस्तव चरितम् ।

( ततः प्रविशत्यधर्मो विभवतश्च परिवारः )

अधर्मः—यद्यपि,

नापृष्टः कस्य चिद् ब्रूयान्न चाऽन्यायेन पृच्छतः ॥
जानन्नपि हि मेधावी जडवल्लोक आचरेत ॥

इति प्रसिद्धा पद्धतिः । किञ्च,

यदि चोरस्य जननी चाण्डालेन हृता बलात् ॥
का हानिस्तत्र विदुषां तथाप्येतदपेशलम ॥

इति विचारपरैर्जगद्बन्धुभिरस्माभिः स्वतएवोच्यते, भो जनाः ! चेतयध्वम् ,

न वा पीता तीव्रा प्रकृतिमधुरा जीर्णमदिरा
न च द्यूतक्रीडा सह कितवसङ्घैर्विरचिता ॥
न वा वेश्या वेश्मन्यपि समुपहूता सकृदहो
वृथा वित्तं विप्रैर्जगति कुधियां लुण्ठनमिदम ॥ ३० ॥

अपि च, अर्थवादश्रुतिनिर्णाशितमतिभिर्वैधेयैर्न संचितानि न भुक्तानि धनानि ।

अपि तु —

पाण्डित्यं कविता कलाकुशलता शौर्यं तथाऽन्ये गुणाः
सन्तु प्राणभृतां तथाऽपि तइमे यैःस्युर्विना निष्फलाः ॥
तान्येतानि धनानि दैववशतो हस्तागतानि ज्वल-
त्स्वाहाप्राणपतेर्मुखे मखमिषान्निर्णाशितानि स्वयम् ॥ ३१ ॥

( स्मृतिमभिनीय सचमत्कारम् ) अहो नु खलु चेतसि चित्रित इवोपदेशो वत्सस्य कार्पण्यस्य । यथा— -

यस्यां विष्णुस्त्रिभुवनगुरुर्नित्यमासक्तचेताः
क्षोणीपालाः समिति तरुणास्ते यदर्थं म्रियन्ते ॥
यस्यां लुब्धा कमलनयना यत्र मोहो मुनीनां
सैषा लक्ष्मीः स्वयमिव कथं नाश्यते बुद्धिशून्यैः ॥ ३२ ॥

( प्रविश्य )

दौवारिकः—जेदु जेदु लाजउलं, अपुव्वाए खण्डिदचिउराए मणस्सिणीए सहिदो कूडपुलाणिओ देव्वं पेक्खिदुं उवगदो दुआरि चिट्ठदि ।

अधर्मः—( स्वगतम् ) यदा प्रभृति,

सत्सङ्गपुण्यवनतीर्थनिषेवणाद्यैः
सार्धं नृपेण तपसा प्रहितं पुराणम् ॥
वर्णाश्रमेषु विदधात्युपजापमेत-
च्चक्षुत्वा ममास्ति न रतिर्न मतिर्न निद्रा ॥ ३३ ॥

तदा प्रभृति सहानृतेन पुराणोद्वासनाय प्रेषितोऽयं ब्राह्मणः सत्वरमागतस्तस्मात्कृतकृत्यो भविष्यति । ( प्रकाशम् ) कुबद्ध ! प्रवेशयैनं, चिरमारभ्य द्रष्टुं समुत्सुकोऽस्मि ।

दौवारिकः—ज देव्वो आणवेदि ।

( इति निष्क्रान्तः )

( ततः प्रविशति कूटपौराणिको बालविधवा च )

पौराणिकः—

नवं वयो मूर्तिरनङ्गकल्पा
शृङ्गारसंभिन्नकथा ऽन्यदारैः ॥
व्यासास्पदं मिष्टभुजिक्रिया चे-
त्यनल्पभाग्यैः कृतिनो लभन्ते ॥ ३४ ॥

विशेषतश्च विश्लिष्टप्रियतमानां विरहोन्मादहेतुरस्मदीयकथाप्रस्तावना प्रगल्भं प्रवर्षतु । सम्प्रति—

कल्लोलिन्यः कलुषसलिलाः कूलपातैः समन्ता-
त्क्षेत्रप्रान्तारचितवृतयः पङ्किलो राजमार्गः ॥

१. जयतु जयतु राजकुलम् । अपूर्वया खण्डिताचकुरया मनस्विन्या सहितः कूटपौराणिको देवं प्रेक्षितुमुपागतो द्वारि तिष्ठति ।

२. यदेव आज्ञापयति ।

किञ्च भवतीं पृच्छामः ।

सन्ति श्यामाः कमलनयना भुक्तिमुक्तिप्रदाश्चेत्
हित्वा तासां रतिविलसितं प्रत्युत स्वीयचित्ते ॥
मेघश्यामं कमलनयनं भावयन्तः कृतार्थं
ये मन्यन्ते स्वमपि क इव प्रत्ययस्तत्र तेषाम् ॥ ३८ ॥

( विधवा शृंगारलज्जां निरूपयति )

**पौराणिकः**--( स्वगतम् ) मामभिलषन्त्या इवास्या दृश्यते चेतः:

पश्यत्यधो वक्रयतीक्षणद्वयं
सभ्रूविभेदं कुपिता हसन्त्यपि ।
नैवोत्तरं किञ्चन मां वदत्यसौ
स्वयं न धर्मस्य मिषेण पृच्छति ॥ ३९ ॥

( प्रकाशम् ) सुन्दरि ! त्वया निरन्तरमस्मदीयकथायामेव सन्निहितया भवितव्यम् । किञ्चान्यत्र पुराणशालायां गन्तुं नायमवसरोऽस्ति । यतः,

निष्कामयन्तो पुरस्तात्कथमपि पशवः सम्पदः साह्यन्तो
वार्यन्तां धावमाना मुहुरिह शिशवः स्थीयतां सावधानैः ॥
जल्पत्स्वेव वणिक्षु श्लथपटविगलत्कच्छकस्तेषु तूर्णं
धाराभिर्वीनमूला कृतकतुकवा भूतलं याति भित्तिः ॥ ४० ॥

अपि च, नीतो दूरं जलमयवशः कोऽपि वृद्धः प्रणाल्या
भ्रष्टः सोऽयं स्खलितचरणः पिच्छिलोत्तुङ्गदेशात् ॥
पङ्कालिप्ततनुर्भटोऽन्यः पतितस्थितोऽयं
दृष्ट्वैतत्स्थ नमामि सुखिनः सौधसंस्था हसन्ति ॥ ४१ ॥

तस्मादिहाश्रमावेऽत्रैव निषीयताम् ।

( इति परिक्रामति )

---

१. 'चेष्टा' इति 'ख' पुस्तके पाठः

अधर्मः--(निर्वर्ण्य)

आकर्णोल्लासिकाश्मीरजहिमकणिकाघृष्टपाटीरलेपः
सूक्ष्मं वासो वसानः प्रकटितविविधन्यासविद्यावलेपः ॥
मञ्जिष्ठारक्तपट्टाम्बरकलितकथापुस्तकः कोकशास्त्रे
सङ्गीते च प्रवीणः सुखयति विधवाः कृष्टपौराणिकोऽयम् ॥४२॥

सर्वथा चायमनुतिष्ठति निदेशम् । यतः,

प्रसन्नमतिसम्मितं वदनपङ्कजं नेत्रयो-
र्गतेर्विविधविभ्रमाः स्फुरितसुन्दरान्तोऽधरः ॥
सबाहुलमितत्वराप्रसरणं पुरः पादयो-
र्नम्य कृतकृत्यतां वदति वाग्विलासं विना ॥ ४३ ॥

पौराणिकः–(उपसृत्य) स्वस्ति स्वस्ति परमेश्वराय ।

अधर्मः--स्वागतम् ।

पौराणिकः--देव ! प्रणतिरिलातलमालिन्यनृपस्य ।

अधर्मः--कुशलम् ? ।

पौराणिकः--देवकृपया ।

अधर्मः—कदानीमधिवासोऽनृतस्य कलिग्रस्य ।

पौराणिकः– सर्वत्र ।

अधर्मः--साम्प्रतं किमनुतिष्ठति ? ।

पौराणिकः--इदानीं हि.

कृत्वादरेण हृदये पदमुत्तमानां
वामं विधाय निभृतं वदनारविन्दे ॥
अष्टादशापि शनकैर्व्यवहारपदा-
न्याक्रम्य विश्वमनृतं स्वरतं करोति ॥ ४४ ॥

१. गतिर्विविधविभ्रमेति 'ख' पुस्तके पाठः ।
२. देवप्रणतिरिलातलमालिन्यानृतस्येति 'ख' पुस्तके पाठः ।

अधर्मः--केन क्रमेण जगदाक्रान्तं युवाभ्याम् ? ।

पौराणिकः--देवनिदेशात्प्रस्थितयोरावयोः किञ्चित्कालं प्रथमतः काश्यां वसतिरासीत् । ततश्चात्र निश्चलं पादमाधाय शनैः कलिङ्गकामरूपकाश्मीरकाम्बोजकर्णाटककोङ्कणमहाराष्ट्रमगधमानटमत्स्यमालवमलयसिंहलशूरसेनसिन्धुसौराष्ट्रसौवीरशाल्वपुलिन्दपारसीकपाञ्चालपाण्ड्यभोजजाङ्गलयवनबर्बरवङ्गविदर्भवैदेहगान्धारगौडगुर्जरनेपाललाटान्ध्राङ्गहूणद्राविडेषु स्थितिं विधाय पुनरपि परमप्रियं गुर्जरमण्डलमावाभ्यामाश्रितम् ।

अधर्मः--तेषु देशेषु कः समाचारः ? ।

पौराणिकः--

पर्जन्यः स्वल्पवृष्टिं वितरति जगती स्वल्पसस्या तरुण्यो
भर्तॄ उज्झन्ति मुख्याश्रमगततरुणाः कामयन्तेऽन्यदारान् ॥
पुत्रा गाः प्रत्कृत्य प्रभवति जनकः क्रोधलोभोपजप्ताः
क्षोणीपालाः सचौराः प्रतिदिशमटवीं घातुका लुण्ठयन्ति ॥४५॥

अपि च, अत्रास्माकमेकः संशयः । यथा--

स्रोतस्विन्यो विरलसलिलाः साधवो मन्दभाग्या
नानाभोगान्भजति च खलो भूरुहोऽल्पं फलन्ति ॥
निर्मर्यादाः कुलयुवतयो पूज्यते दम्भयुक्तः
सर्वं चैतत्तव विलसितं देव ! किं वाऽनृतस्य ॥ ४६ ॥

अधर्मः--आः, कोऽत्राऽनृतस्याऽस्माकं च विशेषो येन संशया-काशः । यतः--

एकः स्वभावो न पृथक् चरित्रं
भिन्नाऽभिधा वस्तुनि नास्ति भेदः ॥
धर्मस्य सत्यस्य यथैकमत्यं
तद्वन्ममात्माऽनृतमस्य चाहम् ॥ ४७ ॥

पौराणिकः—

दारिद्र्याय ददाति धैर्यमधिकं रोगान्समाश्वासय-
त्यानन्दस्य जलाञ्जलिं विरचयत्यस्तं नयत्युन्नतिम् ॥
दाक्षिण्यस्य करोति नाशमनिशं विश्वासमाभीषय
त्येवं देव ! किलानृतस्य चरितं प्रोक्तं समासान्मया ॥ ४८ ॥

अधर्मः—किं तवोपकृतमनेन ? ।

पौराणिकः—इतोऽप्यन्यत्किमुपकर्तव्यम् । यतः—

वैधेयानां सभायामनधिगतनयो मोहगत्यादरेण
त्वत्पादाब्जप्रतापोपनतबलभरस्यानृतस्य प्रसादात् ॥
यत्किञ्चिद्ग्रन्थपत्रं पठितमपठितं यादृशं तादृशं वा
धृत्वा पाणौ सभायां कथयति सततं भारतादिप्रबन्धान् ॥४९॥

अधर्मः—सत्य एव विज्ञो भवति, शिक्षा पुनरुक्तप्राया । तथा-
पि कलेर्मम चाऽहितानामाख्यानानि भारतादौ सन्ति । तथा त्वया स्व
प्नेऽपि न म न ग्र थ्यमिति पुनरवधानाय स्मार्यते ।

पौराणिकः—के वा कलेः प्रतिकूलाः ? ।

अधर्मः—आः किन्न जानासि, ... जर्षयः संक्षेपतस्तत्रा-
पि न वेदने—

भीमात्मजा नलनृपः सुकृताङ्गजन्मा
कर्कोटकः फणिपतिस्तनया ऽचलस्य ॥
रामोऽग्रणीर्गुणवतामृतुपर्णनृपः
संकीर्तनात्कलिमलं दलयन्त्युदीर्णम् ॥ ५० ॥

पौराणिकः—किं वा द्रुह्यन्ति तवाय ।

अधर्मः—

अख्यातं पृथुनलभार्गवार्जुनानां
कौसल्यादशरथमतर्दलायुधस्य ॥

१. तनयाचलायाः इति 'ख' पुस्तके पाठः ।

राजर्षेर्हृदयमुषः शकुन्तलायाः

पापस्य प्रथमगिरुर्जगत्प्रसिद्धः ॥ ५१ ॥

**पौराणिकः**—राजन् ! एते मम श्रुतपूर्वा अपि । अहं तु—

संगीतगान्धर्वविवाहशास्त्र-

कान्ताचरित्रैः श्रवणं स्थितानाम् ॥

स्त्रीणां समाजे विविधैर्विलासैः

सतालहासैः समयं नयामि ॥ ५२ ॥

**अधर्मः**—दैवाद्वैदिकः कश्चित्तत्र समायाति ? ।

**पौराणिकः**—आयातु नाकिभवनादृ गुरुगीश्वरोऽपि

वाचामसौ परिकरं सुदृढं करोतु ॥

व्याख्यानमात्रहतकेन किल दुर्विदग्धै-

र्दूरीकरोतु स कथं चतुराननोऽपि ॥ ५३ ॥

**अधर्मः**—सम्यक् सन्तु पुराणमुद्राश्रितमिति त्वदुक्त्या ऽनुमीयते ।

**पौराणिकः**—अस्माभिस्तु चक्षुषा न दृष्टं तथापि इति किंवदन्ती तिष्ठति—

वेदान्ते धर्मशास्त्रे परिणतमतयो न्यायशास्त्रे प्रवीणा-

काव्यालङ्कारगोष्ठीष्वपि रसिकतमा नाटकाख्यानदक्षाः ॥

काव्यं कर्तुं प्रगल्भाः प्रतिपदमपि ये भावयन्ति स्वबुद्ध्या

तेषां वक्त्रे पुराणं निवसति सकलं सेतिहासं नरेन्द्र ॥ ५४ ॥

**अधर्मः**—अस्तीदानीमपि धर्ममूलशेषस्तच्चतुर्दशविद्याविघाता-य मौढ्यादीन्प्रेषयामः । यतः—

जाड्यप्रमादविक्षेपव्यसनैर्विकलीकृता ॥

विद्या स्थास्यति नैकापि क्व पुनस्ताश्चतुर्दश ॥ ५५ ॥

विद्याया अनुदयकारि तत्र जाड्य-

मभ्यासप्रशमनकारणं प्रमादः

१. गुरुरीश्वरी वा, इति 'ख' पुस्तके पाठः ।

विक्षेपो रिपुरखिलैकवाक्यताया
व्यासङ्गः प्रभवति विस्मृतिं विधातुम् ॥ ५६ ॥

( नेपथ्ये )

देव ! त्वर्यताम् , कलितपानभूमिर्देवी भैरवीयातना वासकसज्जाकल्पेन महाराजं प्रतीक्षते । उपस्थितश्च गणकावेदितो मुहूर्तः । सम्प्रति हि—

द्रुतपतदहिमांशुस्यन्दनाऽर्वत्खुराग्रो-
च्छ्वसितविविधधातुभ्रान्तरेणूत्करेण ॥
छुरितमिव विहायः सान्ध्यमेघैर्विचित्रै-
र्वरुणदिगवलायाः संश्रयत्यम्बरत्वम् ॥ ५७ ॥

अपि च, वासरान्तसमये समुपेतां
पाशपाणिदिशमाश्रितरागाम् ॥
कुङ्कुमारुणकरैरिव लिम्पन्
दृश्यते कमलिनीहृदयेशः ॥ ५८ ॥

अधर्मः –(विलोक्य साकूतम् )

वेदमूर्तिरपि रागमाश्रितः
स्तेजसा निरिरपि स्पृशन्नतः ॥
अम्बरं परिहरन्स्खलत्करः
काश्यपः पतति वारुणीं भजन् ॥ ५९ ॥

तद्वयमपि चिरविप्रयोगविमनस्का देवीं सम्भावयामः ।

( इति राजा सपरिवारो निष्क्रान्तः )

इति श्रीभूदेवशुक्लविरचिते धर्मविजयनाम्नि
नाटके द्वितीयोऽङ्कः ।



१. चर्छालित इति 'ख' पुस्तके पाठः ।

शोकाक्रान्तविवेकशून्यहृदयो ऽपाक्रान्तशास्त्रस्मृतिः
शक्त्याद्यौरसपुत्रनाशविवशो विद्वान वसिष्ठो मुनिः ॥ ३ ॥

**परीक्षा**—सहि समस्सस २ एहि दाव अण्णेसामो जं कंहिवि ठानंमि विज्जा णिलीअ ट्ठिदा हुवे।

**पण्डितसङ्गतिः**—सखि ! अतःपरं किमन्वेषणीयम् ।

अन्विष्टं तदपि सदो नराधिपानां
विद्यार्थी प्रतिमठमादरेण पृष्टः ॥
भट्टानामुदवसतिं विविच्य दृष्टं
विद्यायाः पदमधुनापि नोपलब्धम् ॥ ४ ॥

**परीक्षा**—तह वि एक्केक्कस्स भवणंगणं पविसिअ पेक्खम्ह, एहि दाव तुमं पि ।

( इति पण्डितसङ्गतिं समादाय परिक्रामति )

**पण्डितसङ्गतिः**—सखि ! कोनु खल्वसौ कुण्डलोद्भ्रामितकपोलमण्डलो विषमवैभवगर्वखर्वीकृताखण्डलः पण्डितंमन्यः ।

**परीक्षा**—ओसधकंडनविसट्ठुलहत्था कोवि वेज्जो विअ दीसइ ।

**पण्डितसङ्गतिः**—एनं पृच्छाव:, कदाचिदुपलभ्येतायुर्वेदगन्धः ।

( ततः प्रविशति वैद्यः )

**वैद्यः**—यदाप्रभृति जाड्येनोपालब्धोऽस्मि यत पुरुषायुपजीविनो जनास्तत्र तवैवोपेक्षा मूलमिति, तदाप्रभृति—

१. यापक्रान्तशास्त्रस्मृतिः, इति 'ख' पुस्तके पाठः ।

२. सखि ! समाश्वसिहि २ एहि तावदन्वेषयामः यत् कस्मिन्नपि स्थाने विद्या निलीय स्थिता भवेत् ।

३. तथाप्येकैकस्य भवनाङ्गणं प्रविश्य पश्यावः एहि तावत्त्वमपि ।

४. औषधकण्डनाविसंष्ठुलहस्तः कोऽपि वैद्य इव दृश्यते ।

किमिति दिनमभोजी स्वस्थतां याति कस्मा
त्किमु पतति न खट्वापञ्जरे पुष्टदेहः ॥
कथमिव तरुणानां नास्ति रोगः सदेति
व्यथयति नितरां मे मानसं कापि चिन्ता ॥ ५ ॥

परीक्षा—सहि जुरिदा विअ खणं होहि णं पलिक्खिस्सम्[1]

(पण्डितसंगतिः तथाकरोति)

वैद्यः—यद्यपि,

बिल्वस्तनी वारिदकेशपाशा
धान्यप्ररोहाकलितावतंसा ॥
विश्वातिसारा नलदप्रचारा
न स्मर्यते सापि मयाऽद्य विद्या ॥ ६ ॥

तथापि, मृतस्यायुः पूर्णं परमिति चिरातङ्ककलिते
हरेरिच्छा सद्यो ज्वरजुषि परश्वोऽयमगदः ॥
गुणोऽयं पुष्टेषु त्रिकटुगुटिकानामिति वचो-
विलासो मे विद्याबलमविदिते साहसमपि ॥ ७ ॥

(इति परिक्रामति)

परीक्षा—(उपसृत्य, मप्रमाणोऽयमिति तं पृच्छति) भावमिस्सर इअं णो पिअसही वलीअं क्खु संतावं अणुहवहि, ता से उवाअं कहेदु अज्जो ।[2]

वैद्यः—(स्वगतम्)

ज्वराङ्कुशाद्यैः सविषप्रचारै-
र्ममोपचारैः शतशो म्रियन्ते ॥
तथापि मोहोऽयमहो जनानां
मय्येव वैद्योऽयमिति प्रतीतिः ॥ ८ ॥

१. ज्वरितेव क्षणं भवेन परीक्षिष्यामि ।

२. भावमिश्र ! इयं नः प्रियसखी बलवन्तं खलु संतापमनुभवति, तर्हि अस्या उपायं कथयत्वार्यः ।

(प्रकाशम्) सुन्दरि !

चूर्णं कषायो गुटिकावलेहः
पाकश्च मन्दिरमर्चिकित्सितानि ॥
आरोग्यकारि ज्वरितस्य शीघ्रं
तमागमेनाङ्गनेमकमेव ॥ ९ ॥

पण्डितसङ्गतिः--कस्मिन्निबन्धेऽध्ययनं भवतः ? ।

वैद्यः--आः,

आत्रेयपत्रेऽपि न दत्तनेत्रो
नीतिर्न हारीतमुनेरधीता ॥
न सुश्रुतस्य श्रुतवान् श्रुतिं वा
स्वतोऽस्मि वैद्यश्चरकानभिज्ञः ॥ १० ॥

पण्डितसङ्गतिः--(स्वगतम्) अज्ञानेनैव चिकित्सितोपदेशोऽपि विशुनयति । (प्रकाशं प्रति-उपनिक्रम्)

कः प्रतिजानात्येनं सखि !
कुर्यादुपेक्षां क्वचिदायुषः क्षये
प्रतीक्षते मृत्युरपि स्वयं क्वचित् ॥
आरोग्यभाजोऽपि जनस्य जीवितं
हरत्यकस्मादरोगनौषधम् । ११ ॥

परीक्षा--अहो क्खु महावेज्जो एसो[1] ।

पण्डितसङ्गति--अथ किम् ।

परीक्षा--सुमरेदि वा पिअसही तस्स वेज्जस्स जस्स दिट्ठिपहे पडिओ दीहरोअकलिदो वि कंचनकलेवरो ज्जेव संवुत्तो[2] ।

१. अतः खलु महावैद्य एषः ।

२. स्मरति वा प्रियसखी तस्य वैद्यस्य यस्य दृष्टिपथे पतितो दीर्घरोगकलितोऽपि काञ्चनकलेवर एव संवृत्तः ।

**पण्डितमङ्गतिः**--कथं विस्मरामि पुराणधन्वन्तरीयकृतश्रमं तं महापुरुषम् ।

गुल्मोऽरण्ये पर्वते गण्डमाला
कुष्ठं हट्टे शूलमीशानपाणौ ॥
चित्रे पाण्डुः कृष्णपक्षे क्षयोऽभू-
दग्निर्न्यग्रे मीनवर्गः सरोगः ॥ १२ ॥

**परीक्षो**--लम्बपत्तहत्थो को ण खु एसो इदो अहिवट्टइ ? ।

**पण्डितमङ्गतिः**--प्रायेण गणक इव दृश्यते ।

( ततः प्रविशति गणकः )

**गणकः**--आजन्मसिद्धप्रमादपरवशतया मुहूर्तमपि न जानीमः, किमुत गणितम, तथापि देशान्तरीयपण्डितैः,

पञ्चाङ्गपत्रे प्रकटीकृतानां
श्रुत्वा गतिं खेचरतारकाणाम ॥
सम्भावितं प्रश्नमनुब्रुवन्तो
ज्योतिर्विदः केऽपि वयं पृथिव्याम् ॥ १३ ॥

**पण्डितमङ्गतिः**--( उपसृत्य सप्रणामम् ) भगवन्कुत्राऽध्ययनं भवतः ? ।

**गणकः**--प्रश्नग्रन्थे ।

**पण्डितमङ्गतिः**- ( जनान्तिकम् )

शिरोमणिर्भूतभविष्यबोधे
बीजस्थितिः कण्ठगरत्नमाला ॥
लीलावती दृष्टिपथे न यस्य
ज्योतिर्विदेषः प्रथमाश्रमस्य ॥ १४ ॥

---

१. लम्बपत्रहस्तः को नु खल्वेष इतः अभिवर्तते ।

**परीक्षा**——मए से चमक्कारं पेक्खिअ परिक्खिदो, ण क्खु सच्चजोइसिओ किन्तु कोवि णक्खत्तसूचओ हविस्सदि ।

**पण्डितमङ्गतिः** —( गणकं प्रति ) भगवन् ! एकं प्रश्नविषयं ब्रूहि ।

**गणकः**—भावमब्धिफलदा नभश्चराः

क्रूरसौम्यखगदृष्टयो मिथः ॥

द्विःस्वभावमपि लग्नमाहितं

सिद्धिमेष्यति परं न निश्चयः ॥ १५ ॥

**पण्डितमङ्गतिः**—भगवन् ! अवग्रहेण पीड्यतेऽयं जनस्तद् ब्रूहि पर्जन्यवार्ताम्

**गणकः**——( स्वगतम् ) अत्रापि स्वाध्ययनानुसारेण संशयितमेवोत्तरं वदिष्यामि । ( प्रकाशम् )

धान्येश्वरोऽस्ति कुजनि शनिरब्दपालो

दृश्यानि कानिचिदुडून्यगलञ्च गर्भे ॥

केषाञ्चिदात्मगणितेन तथापि मन्ये

वृष्टिं विधास्यति भवच्छिशितिजननं नः ॥ १६ ॥

**पण्डितमङ्गतिः**—( परीक्षां प्रति ) सखि ! सर्वथैव.

रम्याऽऽश्लेषान्तगात्री मृगमसनयना पद्मसंस्पर्धिहस्ता

चित्राक्रान्तं चवस्त्रा श्रवणयुगलसत्कुण्डला ऽदृष्टपूर्वा ॥

ज्ञानज्येष्ठा विशाखावृतमदननरोमूढतो रोहिणी सा

सर्वक्षादिष्टपथ्या विरतिमुपगता कापि वेदान्तविद्या ॥ १७ ॥

**परीक्षा**:- सहि ! एहि दाव अण्णदो अण्णेसामो ।

१. मयाऽस्य चमत्कारं दृष्ट्वा परीक्षितः। न खलु सत्यो ज्योतिषी किन्तु कोऽपि नक्षत्रसूचको भविष्यति ।

२. सखि ! एहि तावदन्यतोऽन्वेषयावः ।

पण्डितमण्डली:—

भूगोलः सलिलधिसंवृतो व्यलोकि
प्रश्नेनाप्यविकलितो ऽखिलः खगोलः ॥
सिद्धान्तागमगणितानि गवेषणीयाः
कदानीं जगति सुदुर्लभा ऽङ्कविद्या ॥ १८ ॥

वैद्यः—( अवलोक्य ) अये चिरेण दृष्टः प्रियसुहृद्दैवज्ञः ।

गणकः--( उपसृत्य ) अपि सुखिनो मिश्राः ? ।

वैद्यः--अद्य विशेषेण ।

गणकः--नचेत्कार्यातिपातोऽन्यस्तर्हि धर्मशास्त्रविषयप्रश्नाय स्मार्तशुक्लसदनं गच्छावः ।

वैद्यः--सावकाशोऽस्मि । ( इत्युत्तिष्ठति )

परीक्षा--( सहर्षम् ) तस्य सदने धर्मशास्त्रविद्या भविष्यति ।

( इति सर्वे परिक्रामन्ति )

( ततः प्रविशति स्मार्तः )

स्मार्तः—विक्षेपस्यागमसेविना मया न कोऽपि दृष्टो निबन्धस्तथापि--

व्रतबन्धविवाहसद्विधिज्ञः
श्रुतवानाह्निककर्मपुस्तकेषु ॥
स्वयमस्मि च पण्डितस्य पुत्रः
किमसाध्यः स्मृतिनिर्णयोऽधुनेति ॥ १९ ॥

( इति परिक्रामति । उपसृत्य सर्वे प्रणमन्ति )

स्मार्तः—स्वागतम् । ( इत्यभिनन्दति )

गणकः--ब्रह्मन् ! प्रथमोत्पन्नगर्भाणां कदा सीमन्तः ? ।

---

१. प्येवकलित, इति 'ख' पुस्तके पाठः ।
२. श्रमवानिति 'ख' पुस्तके पाठः ।
३ किमसाध्यः स्मृतिनिर्णयोऽधुना मे, इति 'ख' पुस्तके पाठः ।

स्मार्तः--मासि षष्ठेऽष्टमे वा ।

पण्डितमङ्कतिः--भगवन् ! सीमन्तः क्षेत्रसंस्कारः सकृदेवानुष्ठेयः

स्मार्तः—षष्ठेऽष्टमे वा मासि सीमन्त इति याज्ञवल्क्येन वाक्यद्वयमाज्ञप्तः ।

पण्डितमङ्कतिः--अस्यां स्मृतौ कालस्य विकल्पो न समुच्चयः ।

स्मार्तः--( स्वगतम् ) अनधीतशास्त्रस्य ममाप्यत्र सन्देहः । ( प्रकाशम् ) क्वचिदपि विकल्पः क्वचित्समुच्चयोऽपि ।

परीक्षा—( जनान्तिकम् ) कोवि मुक्खो विअ दीसइ एसो णं पुच्छेहि दाव विण्णादसत्थो णवेत्ति ।

पण्डितमङ्कतिः--ब्रह्मन् ! कापि बाला त्वया दृष्टा ? ।

स्मार्तः—किमाचारा सा ? ।

पण्डितमङ्कतिः—

या मानवी कोकिलकूजितस्वरा
मिताक्षरावद्धवचोमनोहरा ॥
का ऽप्यत्रिजन्मानन्दक्षदर्शना
पाराशरीति स्मृतिमार्गगामिनी ॥ २० ॥

स्मार्तः—न खलु साऽस्माकं कदापि दृष्टिगोचरा ।

परीक्षा—( सरोषम् ) अविण्णादधम्मसत्थो किंति लोअं विप्पतारेसि ।

स्मार्तः—आः पण्डितंमन्ये ! अस्मदायतनानपोद्यैव निर्णायिद्भिर्जन्म गमितम् । अपि च—

न्यायः स्मृत्योर्विरोधे क्वचिदपि बलवानर्थशास्त्राद् बलीयः

१. च, इति 'ख' पुस्तक पाठः ।

२. कोऽपि मूर्ख इव दृश्यते एषः, एनं पृच्छ तावद्विज्ञातशास्त्रो नवेति ।

३. अविज्ञातधर्मशास्त्रः किमिति लोकं विप्रतारयसि ।

क्वाप्युक्तं धर्मशास्त्रं क्वचिदपि वचने देशभेदाद्यवस्था ॥
बाधो ऽन्यस्मिन्विपक्षे क्वचिदपि गदितो धर्मकल्पे विकल्प-
स्तेनैवं वाक्यभेदात्सुमुखि ! न नियतो धर्मशास्त्रार्थ एकः ॥ २१ ॥

पण्डितमङ्गतिः—( साकूतम् )

दिगन्तसंसक्तनितान्तपाण्डित-
प्रगल्भवाणीविमलीकृतश्रुतेः ॥
विरुद्धशास्त्रार्थविडम्बनाभृता
त्वया समुत्पादि ममापि संशयः ॥ २२ ॥

परीक्षा — सहि ! अण्णाददम्मसत्थमग्गस्स एदस्स अज्जाणमि-
स्सस्स पलविदेण अप्पणो जाणत्तणं किंति संसअदूसिदं करेसि ।

पण्डितमङ्गतिः—सखि ! धारय माम् ।

तिरयति तिमिरं दृशोर्विलासान्
दहति हृदन्तकथा च बान्धवानाम् ॥
जनयति जडतां प्रयत्नमान्द्यं
कमपि विवेकमपाकरोति शोकः ॥ २३ ॥

परीक्षा—समस्सस समस्सस ।

पण्डितमङ्गतिः— किं करोमि क्व गच्छामि ? ।

आचरे प्रथमाखिलव्यवहृतिप्रावीण्यशालिन्यलं
प्रायश्चित्तगतं मृतस्य नितरामावेदयन्ती स्वयम् ॥
कालज्ञानवती विपाककुशला सत्कर्मणां सङ्गता
सा कान्ता श्रुतिवर्त्मगामिनयनप्रान्ता ऽधुना नेक्ष्यते ॥ २४ ॥

१ 'समुदपादि' इति युक्तम् ।
२ सखि ! अज्ञातधर्मशास्त्रमार्गस्यैतस्याज्ञानमिश्रस्य प्रलपि-
तेनात्मनो ज्ञातृत्वं किमिति संशयदूषितं करोषि ।
३. बान्धवानामिति 'ख' पुस्तके पाठः ।
४. समाश्वसिहि, समाश्वसिहि । ५. जनस्येति 'ख' पुस्तके पाठः ।

**स्मार्तः**—(गणकं प्रति) सखे! इदं कृत्याद्वयं कुतः समुपार्जितम्।

**पण्डितमङ्गातिः**—किमपराद्धमावाभ्यां येन परीक्षणमात्रप्रयोजनेन प्रश्नेनोद्विग्नोऽसि।

**स्मार्तः**—आः संसारव्यवहारानभिज्ञ!

भवति गुणगणाभिमानभाजा-
मपि सहसा प्रतिमानिरासहेतुः।
सदसि विबुधसंश्रिते कृतं य-
त्त्व कथमशास्त्रवचः परीक्षणं ननु॥ २५॥

**गणकः**—(श्रुतिमभिनीय) अये! दक्षिणस्यानातिस्येव कथमकस्मात्स्वरः!।

**स्मार्तः**—(विमृश्य) आः ज्ञातम्। एकोद्दिष्टमेनमावास्त्वस्थकलेवरतया व्याकुलान्तःकरणः सावधं गायेतायाः-

पत्न्या नितम्बमभिमृश्य शिरो भ्रमेण
किं केशपाशविकला मृतभर्तृकेयम्॥
इत्थं विषण्णहृदयः शयने निषण्णो
हा पुत्र! मातरिति रोदिति वैदिकोऽयम्॥ २६॥

**परीक्षा**—सहि! एहि दाव तस्स रुदन्तस्स छान्दसस्स घरम्मि वेओ हुविस्सदि।

**पण्डितमङ्गातिः**—निखिलजनमदर्नाथचरितं न शक्नोम्यवलोकयितुं दुःखस्य महापुरुषस्य। यतः,

शिक्षाविहीनो न च कौतुकज्ञो
छन्दोऽनुरुद्धं न च यतिमुक्तम्॥

१. स्मार्तस्येवोक्तिः 'ख' पुस्तके पाठः।

२. एहि तावत्तस्य रुदतश्छान्दसस्य गृहे वेदो भविष्यति।

३. साधु! इति 'ख' पुस्तकेऽधिकम्।

भग्नाङ्गसन्धिर्विकलस्वरेण
दृष्टोऽपि वेदः सदयं दुनोति ॥ २७ ॥

**परीक्षा**—सहि ! अवेहि मन्दमहुरे पाणिनीअसद्दो विअ सुणीअदि ।[1]

**पण्डितमङ्गतिः**—अष्टाध्यायीमात्रं भविष्यति न पुनः प्रमाद-पराभूते जगति महाभाष्यम् ।[2]

**परीक्षा**—कहं विअ ?[3] ।

**पण्डितमङ्गतिः**—

अभिनवरसभारक्रान्तिभाराङ्कितेषु
प्रकटितगुणवृद्धिर्यैस्तु सन्धिप्रचारा ॥
सखि ! कथमल्पानां स्वादनीयप्रकारा
विषधरवदनात्स्या कापि पीयूषधारा ॥ २८ ॥

**स्मार्तः**—किमुद्दिश्य भवतोरितस्ततः परिभ्रमणम् ? ।

**पण्डितमङ्गतिः**—अस्माकं यूथात्परिभ्रष्टाः काश्चन धर्मशीलाः सुन्दर्यस्तासामन्वेषणाय ।

**स्मार्तः**—(गणकं प्रति) सखे ! यदि जानासि ब्रूहि तावदनयोः प्रश्नमिदानीं विद्या कुत्रेति ।

**गणकः**—(स्वगतम्) वयं तावदुन्मूलनाय विद्यानामधर्मेण भूपतिना निर्दिष्टास्तत्परिशोधनं कुत्र जानीमः, तथापि अन्यत्र श्रुतमुत्तरं वदिष्यामि ! (प्रकाशम् गणितमभिनीय) न यत्र कुत्रापि किन्तु,

दारिद्र्यदुर्ललितवृत्तिनभाग्यभोगा-
न्याश्रित्य धैर्यमवलम्ब्य मनस्विनाञ्च ।

१ सखि ! अवेहि मन्दमधुरः पाणिनीयशब्द इव श्रूयते
२. कति ‘स्व’ पुस्तकाध्यकम् ।
३. कथमिव ।

अभ्यासतीव्रधिषणागुरुभक्तिभाजां
स्वान्तं प्रविश्य गिरिदुर्गमिवाऽधिशेते ॥ २० ॥

**परीक्षा**--( सहर्षम् ) सहि ! दिट्ठिआ वड्ढसे एहि दाव तं गामं गच्छम्म जहिं ते महापुलिमा जाणं हिअए णिवासो विज्जाणमं।

( इति निष्क्रान्ता पण्डितसङ्गतिः )

**स्मार्तः**--वयमपि पुंसवनसीमन्तकशास्त्राण्यभ्यासेन दृढीकुर्मः।

( इति सर्वो गणको निष्क्रान्तः )

इति श्रीमच्छुक्लभृदेवविरचिते धर्मविजय-
नाम्नि नाटके तृतीयोऽङ्कः॥

१. सखि ! दिष्ट्या वर्धसे, एहि तावत्त ग्रामं गच्छाव, यत्र ते महापुरुषा येषां हृदये निवासो विद्यानाम्।

## चतुर्थोऽङ्कः ।

( ततः प्रविशति प्राड्विवाकः )

प्राड्विवाकः--अये प्रभातैव रजनी, तथा हि—

या मोदते समुदिते हिमधाम्नि पूर्वं
ज्योत्स्नाऽधुना विलयमेति सहैव तेन ॥
प्राणेश्वरप्रणयहेतुरनन्यभाजां
वामभ्रुवां सहगतिर्जननान्तरेषु ॥ १ ॥

अपि च, पूर्वश्रिया विरहितामलकेशहीनां
दीनामिमां कुमुदिनीं नतकैरवास्याम् ॥
संपश्यतां न करुणा समुदेति केषां
कोऽप्यत्र भाविनियतः समयो बलीयान् ॥ २ ॥

का पूर्णचन्द्रेण युता निहन्ति का
तमांसि भानोरविलङ्घ्यमत्र किम् ॥
का दुःखदा कोककुटुम्बिनी कथं
राकाविभाऽस्योत्तरमादितोऽन्यथा ॥ ३ ॥

आदिष्टोऽस्मि भूपतिना सुकृतेन, यत्सदस्यमाहूय व्यवहारोऽयं द्रष्टव्य इति, तत्कदासौ धर्मासनं सम्भावयिष्यति । ( इति परिक्रामति, पुरोऽवलोक्य ) अयमस्माकं सदस्यः ।

( ततः प्रविशति सदस्यः )

सदस्यः— कष्टः खलु धर्मः सभासदाम् । यतः—

मा सभां प्रविशतु प्रतिष्ठितः
संस्थितो वदतु वा समञ्जसम् ॥
पातनं भजति यत्र विब्रुव-
न्नब्रुवन्नपि नरः किलैनसाम् ॥ ४ ॥

अपि च, योऽनुयाति कुपथस्थितं नृपं
रागलोभभयक्रुद्धिचेतनः ॥

गण्डशैल इव मज्जति स्वयं
मज्जयत्यपि स मेदिनीपतिम् ॥ ५ ॥

किञ्च, निसर्गोज्वलप्रकृतिरपि दुर्जनसंसर्गेण दूषित एव । यतः-

पाथसां मकरवानिवाशयः
सर्पयुङ् मलयजो यथा द्रुमः ॥
सज्जनोऽपि खलसभ्यसङ्गमाद्
भूपतिर्भवति भीतिदायकः ॥ ६ ॥

प्राड्विवाकः--गुरुः खलु सन्देशो देवस्य यद् दुरात्मन्यनृते क्षणमपि न विश्वसितव्यमिति । यतः—

शृङ्गिणां क्षितिभुजां नदीनद-
स्रोतसां नखभृतां नतभ्रुवाम् ॥
दंष्ट्रिणामनृतसक्तचेतसां
शस्त्रिणाञ्च चरिते न विश्वसेत् ॥ ७ ॥

सदस्यः -विद्यया विमलयाऽप्यलङ्कृतो
दुर्जनः सदसि माऽस्तु कश्चन ॥
साक्षरा हि विपरीततां गताः
केवलं जगति तेऽपि राक्षसाः ॥ ८ ॥

( इत्युपसर्पति )

प्राड्विवाकः— अद्य खलु चारमुखादष्टादशस्वपि व्यवहारविषयेष्वनृतेनोपजप्तमिति । तदाकर्ण्य त्वरिततरं मां समाहूय राज्ञाऽऽज्ञप्तम् , यन्मध्यमामात्यो दण्डमुखेनास्माभिः सहस्रघोपालघोषाऽप्यत्राऽप्यनर्वाहितास्तिप्रति । इति तत्सविधे भवताऽपि— ऋणादाननिक्षेपा-

१. ऋणादाननिक्षेपास्वामिविक्रयसमुत्थानदत्तानपकर्मवेतनादानसंविज्ञ्यतिक्रमक्रयविक्रयानुशयस्वामिपालविवादसीमाविवाददण्डपारुष्यवाचिकपारुष्यस्तेयसाहसस्त्रीसंग्रहणस्त्रीपुधर्मविभागद्यूताह्वयनां तेषामवलोकने सावधानेन भवितव्यम, इति 'ख' पुस्तके पाठः

स्वामिविक्रयसम्भूयसमुत्थानादत्तानपकर्माभ्युपेत्याशुश्रूषावेतनादानसंविव्यतिक्रमक्रयविक्रयानुशयस्वामिपालविवादसीमाविवादधर्मदण्डवाचिकपारुष्यस्तेयसाहसस्त्रीपुंसधर्मविभागद्यूताह्वयानां तेषामवलोकने सावधानेन भवितव्यमिति । तत्र च—

ग्राह्यः समर्थः प्रतिभूर्विवादे
भाषानुरोध्युत्तरमाशु लेख्यम् ।
हीनः प्रदद्याद्धनिने धनानि
नृपस्य दण्डं पणकृत्पणञ्च ॥ ९ ॥

ततश्च, उक्तिभिर्लिखितवीरशासनः
साक्षिभिर्विविधदिव्यकर्मभिः ॥
निर्णयोऽस्तु विनिवारितच्छलः
पीड्यतामनृतसङ्गतो जनः ॥ १० ॥

तत्र च, सश्रुताः शुचयः कुलप्रसूता
धनवन्तः सदयाः स्वधर्मसंस्थाः ॥
ऋजवः समदर्शिनस्तटस्था-
स्त्र्यवराः संसदि साक्षितां भजन्तु ॥ ११ ॥

एवञ्च, पक्षपातधनकामनापर-
त्रासवद्भिरपि या विलोकिता ॥
साऽन्यथा व्यवहृतिः प्रवर्ततां
वर्ततांञ्च निखिलं यथा स्मृतिः ॥ १२ ॥

भवांश्चात्र साहाय्ये निर्दिष्टः ।

सभ्यः—धन्योऽस्म्यनुगृहीतोऽस्मि । आर्य ! ममापि चेतसि स-

---

१. भुक्तिभिरिति 'ख' पुस्तके पाठः ।
२. संश्रुता इति 'ख' पुस्तके पाठः ।
३. यथास्मृति, इति 'ख' पुस्तके पाठः ।

वेदाऽयं मनोरथः, परन्तु, अनृतचरित्रादुद्विग्नोऽस्मि । यतः,

उष्णः क्वचित्क्वचिदुपाश्रितशीतभावः
साधारणः क्वचिदुपायशतैरसाध्यः ॥
नानाप्रलापकुशलः परिशंकनीयः
कर्णेजपो ऽतिबलवानिव सन्निपातः ॥ १३ ॥

प्राड्विवाकः—सत्यम्—

चन्दनारणिनिशेशमणिभ्यां
जन्मवानपि जगद्दहनोऽग्निः ॥
तापसस्य बटुरप्यबलानां
पीडनाय पिशुनः पटुरेव ॥ १४ ॥

तथापि, स प्रविशन्सकुलं निग्राह्य, परन्तु कः पुनः संक्षेपतो दुर्विनीतानां विनेता शास्त्रार्थः ? ।

सभ्यः—निवेशनविनाशनं द्रुतविवासनं देशत-
स्तिरस्कृतिरनेकधा विविधवध्यघातैर्वधः ॥
भगादिविकृतश्च चिह्नलके खरारोहणं
दमः प्रथममध्यमाऽधमभिदा त्रिधा साहसे ॥ १५ ॥

प्राड्विवाकः—किमेतावत्कर्तुं प्रभवति व्यवहारः ? ।

सदस्यः—कः सन्देहो यदि भविष्यत्युद्यमपरः ।

प्राड्विवाकः—सत्यम् ।

उच्चैर्न कूटं कनकाचलस्य
नीचैः कुतश्चिन्न तलं रसायाः ॥
दिशो न दूरं न नदी भुजङ्गा
गम्भीरतायां व्यवसायभाजाम् ॥ १६ ॥

सदस्यः— ( अवलोक्य ) देवसकाशादुपावृत्तेन दण्डेन किमप्यभिधीयमानः,

शृण्वन्संप्रतिपत्तिमादरपरः साक्ष्यञ्च मिथ्योत्तरे
प्राङ्न्याये जयपत्रदर्शनविधिज्ञः प्रत्यवस्कन्दने ॥
भुक्त्याद्यैः परिभावयन्वदनशोषेण स्खलद्वाग्भरै-
र्दुष्टानां कलयन् शुभासनगतो राज्ञः प्रधानो ऽपरः ॥ १७ ॥

तदेहि, कृताह्निकावेनं द्रक्ष्यावः ।

( इति निष्क्रान्तौ )

॥ विष्कम्भकः ॥

( ततः प्रविशति व्यवहारो दण्डश्च )

व्यवहारः—वत्स ! कष्टा खलु राजसेवा ऽनुजीविनाम्, यदेवमन्नपानवमनव्यसनमपहाय नित्यमुद्युक्त एव ।

प्रगल्भोऽस्मि स्वीयव्यवहारविधाने प्रतिपदं
करोमि व्यापारं नृपतिभयपाशेन यमितः ॥
निहन्मि कृपणामनयमिति जानात्यपि भवा-
नुपालम्भः को वा तदपि मयि राज्ञा विरचितः ॥ १८ ॥

दण्डः—आर्य ! कः सन्देहः,

वेश्या धनेन भुजगः पयसा पलेन
व्याघ्रो नृपः प्रतिदिनं परिचर्यया च ॥
सन्तोषितोऽपि विदुषा परिशङ्कनीयः
प्रायः प्रतिक्षणविलक्षणबुद्धयोऽमी ॥ १९ ॥

व्यवहारः--वत्स ! जानामि किंमूलः सर्वात्मनापि खेदो देवस्य ? ।

दण्डः--अदण्ड्यदण्डेन दण्ड्यपरिवर्जनेन च । सर्वोऽयमपराधोऽनृतस्य, तदस्य निग्रहाय सत्यं नियोजयामि । हिंसादिकमुन्मूलयितुमहिंसादयोऽपीदानीमेव प्रेषणीयाः, इत्येषाऽऽज्ञा राज्ञः ।

व्यवहारः –वत्स ! सम्यगनुबोधितोऽस्मि । कः कोऽत्र भोः ? ।

( प्रविश्य दौवारिकः )

दौवारिकः--आणवेदु अमच्चो[1] ।

व्यवहारः--धर्मसाधनानि सत्वरमाकारय ।

दौवारिकः—जहा आणवेदि सामी[2] ।

( इति निष्क्रम्य, सहाऽहिंसादिभिः प्रविशति )

अहिंसा—

आकीटमादन्तिनमाविराजं
समं शरीरेषु चतुर्विधेषु ॥
आत्मेति जानन् तृणगुल्मवल्ली-
छेदेऽपि कुर्याद्विबुधो मनः कः ॥ २० ॥

सत्यम्—शैत्यं प्रयातु रविरुष्णकरत्वमिन्दुः
स्थैर्यं जहातु हिमवानचला चलाऽस्तु ॥
धैर्यं विमुञ्चतु महोदधिरप्यकस्मात्
कस्मात्सतोऽस्तु पणितं भणितञ्च मिथ्या ॥ २१

अस्तेयम्—दानं ददत्यनुदिनं शतशो वदान्या
वृक्षाः फलन्त्यनुदिनं बहुशः फलानि ॥
भर्तुश्च दुर्भरमथो विविधेऽप्युपाये
धिक् चौर्यकर्मनिरतं विरतं स्वधर्मान् ॥ २२ ॥

शौचम्—मृत्सासु तोयेषु परिग्रहेषु
न दुर्लभेष्वप्यकृतात्मशौचाः ॥
कथन्नु जीवन्त्यथ वाऽन्यथाऽयं
प्रारब्धभोगो नरकाद्गरीयान् ॥ २३ ॥

इन्द्रियनिग्रहः—कौलेयकानामथ रासभाना-
मनिग्रहस्तुल्य इहेन्द्रियाणाम् ॥

१. आज्ञापयत्वमात्यः ।
२. यथाऽऽज्ञापयति स्वामी

धन्यः परं कोऽप्ययमूर्ध्वरेता
भेत्तुं रवेर्मण्डलमुत्कचेताः ॥ २४ ॥

दानम्--बलिस्त्रिलोकीं दिनभर्तृपुत्रो-
प्युत्कृत्य चर्मास्थिगणं दधीचिः ॥
विजित्य रामः पृथिवीमयच्छ-
त्किं याचमानाय न देयमस्ति ॥ २५ ॥

दमः—आसायमाप्रातरतृप्तिभाजो
भक्ष्येण गावः सुलभा भवन्ति ॥
चान्द्रायणादिव्रतवीतपापाः
सन्तः पृथिव्यां न कथ दुरापाः ॥ २६ ॥

दया—ते पीडयन्तु कथमन्यदिहात्मदोषै-
र्यः पीडितस्तमनु वीक्ष्य निरन्तरं ये ॥
पीड़ां भजन्ति हृदि निर्मलबुद्धिसारा-
स्ताराधिपोज्वलदयोत्थयशःप्रसाराः ॥ २७ ॥

क्षान्तिः—चाटूनि यस्य गदितानि स वातुलोऽपि
क्रूरोऽपि वा क्षणमसौ भवतु क्षमावान् ॥
धन्यास्त एव शतशोऽपि विनिन्दितानां
येषां न भेदमुपयाति मुखस्य रागः ॥ २८ ॥

( इति सर्वे परिक्रामन्ति )

दौवारिकः—एसो अमच्चो तुह्माणं पडिवालअं चिट्ठदि, ता उवसप्पंतु[1] महानुहावा[2] ।

( सर्वे उपसृत्य प्रणमन्ति )

व्यवहारः- ( यथोचितमभिनन्द्य सर्वान्प्रति ) काश्यामव्याहतं शा

१. भवन्तु, इति 'ख' पुस्तके पाठ ।

२. एष आमात्यो युष्मान्प्रतिपालयंस्तिष्ठति, तदुपसर्पन्तु महानुभावाः ।

सनं विधाय प्रयागे निवेशितस्कन्धावारो दुर्बुद्धिरधर्मः संग्रामायोद्योगमातनोति । नासीराच्च तस्य विनिर्गतैर्हिंसादिभिर्व्याकुलीक्रियन्ते महाजनसमाजा इति प्रेक्षकजनादाकर्ण्य क्रोधपरवशेन स्वामिना समाज्ञप्ता भवन्तः संगराय । तदिदानीमेव प्रचलन्तु, प्रवर्तयन्तु तत्र प्रियसाहसव्यवहारम् ।

सर्वे— यदाज्ञापयत्यमात्यः ।

( इति निष्क्रान्ताः सर्वे )

व्यवहार — महापातकान्वेषणाय प्रेषितः किन्तु चिरयति कोऽपालः ।

दण्डः-–पश्चात्मनोऽपि तस्य निवासः प्रच्छन्न इत्येतावतैव विलम्बः ।

( ततः प्रविशति पश्चाद्बद्धपुरुषमादाय कोट्टपालः पदातिनौ च )

एकः– -अले गुलुजणमिहिलापलंगक्खलिअ सुलापाणघुम्मिअलोअणजुअल कीर्षिह किंत्ति तुए णिरवराहो वराओ बह्मणो जंघग्गाहं मारिदो ।

( महापातकस्तूष्णीमास्ते )

द्वितीयः -- णिद्दिकवहिअअ बह्महमहारअ पाटच्चल किंत्ति तुह्णीं भूदोसि ।

कोट्टपालः— पावपुलिस सच्चं भण कोसि तुमं किंत्ति वा एतारिसं कम्म करेसि ।

महापातकः—( सगर्वम् ) योऽस्मि सोऽस्मि न बिभेमि भवा

१. अरे गुरुजनमहिलापर्यङ्कस्खलित ! सुरापानघूर्णितलोचन युगल ! किमिति त्वया निरपराधो वराको ब्राह्मणो जंघग्राहं मारितः

२. निर्दय ! ब्रह्महमहारक ! पाटच्चर ! किमिति तूष्णीं भूतोऽसि

३. पापपुरुष ! सत्यं भण कोऽसि त्वम्, किमिति वा एतादृशं कर्म करोषि ।

दशभ्यो वराकेभ्यः । यतः—

गच्छाम्यगम्यां मदिरां पिबामि
हरामि वैप्रं कनकं तदर्थम् ॥
द्विजान्धनार्थं शतशो निहन्मि
स्थितोऽस्मि सङ्गेऽपि च मद्विधानाम् ॥ २९ ॥

कोष्ठपालः—( सप्रत्यभिज्ञमिव ) एस पञ्चमहापावपुलिसे रण्णो अधम्मस्स अमच्चे, अह्मसआसा धम्मसासणं ण आराएदि तेण गच्छ-म्ह अमच्चस्स ववहारस्स सकासम्।

( इति सर्वं परिक्रामन्ति )

कोष्ठपालः—जयतु जयतु अमात्यः । अमात्य ! स्वामिन् ! एष पञ्चमहापापः ।

व्यवहारः ( अवलोक्य सक्रोधम् ) आः कापुरुष ! शतशोऽपि शासित किमिति पापान्न विरमसि ।

पञ्चमहापापः—सुरापानादविरामे तु सोमपानमेवेति गुरवो वदन्ति ।

व्यवहारः— कथमिव ? ।

पञ्चमहापापः—पश्य,

स्वर्गाय जुष्टवसे मिलितैर्निपीतः
सोमः कटुर्यदि भवेत्किल याज्ञिकानाम ॥
किं पीयते न मधुरा विधुरैर्धिया त-
त्साधं सुखाय मदिरा मदिरेक्षणाभिः ॥ ३० ॥

दण्डः—( सभर्त्सनम् ) आः कुटिलप्रकृते ! हिरण्यहरणे किमिति प्रवृत्तोऽसि ! ।

१. एष पञ्चमहापापपुरुषः राज्ञोऽधर्मस्यामात्यः। अस्मत्सकाशा द्धर्मशासनं नाराधयति, तेन गच्छामोऽमात्यव्यवहारस्य सकाशम्।

**पञ्चमहापापः**—सद्‌गुरूपदेशेन। तथा हि—

हेयं स्तेयं कुशलमतिभिर्नोऽविधेयं विधेयं
मूर्ध्नश्छेदे परिणतिमुपैतीति यन्नीतिशास्त्रम्।
तत्र ब्रूमो धनिकवदनालोकनं मानभाजां
कीदृक् कीदृक् तदनु भवति प्रार्थनायाश्च भङ्गः॥ ३०॥

**व्यवहारः**--साहसमेतावताऽनुमीयेत। अगम्यागमनेऽपि कश्चिदाचार्योपदेशो भविष्यति।

**पञ्चमहापापः**--अत्र कः सन्देहः। यतः—

रूपेण रम्यवयसा बहुना धनेन
भोग्या भवन्ति तरुणाः परकामिनीनाम्॥
यस्यास्ति नैकमपि तस्य निजाऽप्यगम्या
गम्यास्तु दुर्लभतराः कथमन्यकान्ताः॥ ३१॥

**दण्डः**—(सखेदम्) आः पाप! ब्रह्मवध्यायां केनोपदिष्टोसि?

**पञ्चमहापापः**—स्वेनाऽन्तरा[1] कुलपरंपरया। यतः,

द्रोणोऽर्जुनेन समघाति पुलस्त्यपुत्रो
रामेण शास्त्रमथ किं पठितन्न ताभ्याम्॥
सोऽहं शपामि शतशो यदि विप्रवध्या
दोषावहा किल भवेत्पुरुषार्थभाजाम्॥ ३२॥

**व्यवहारः**—(कोष्टपालं प्रति) दुष्टदमन! न दुष्टोऽयमकृत्याद्विरमते। नाप्यनुशेते न प्रायश्चित्तानां कर्मकर्ताऽतो वध्यघातैर्हन्यताम्।

**कोष्टपालः**—केण उण उवाएण णं विसमेम्ह[2]।

**व्यवहारः**—प्रथमतास्त्रिशिखनमेनं तप्तसुरां पाययित्वा स्वर्णमुसलेन शिरसि कृतक्षतमश्वत्थकाष्ठे प्रज्वालयन्तु।

1. स्वेनान्तरात्मनेति 'ख' पुस्तके पाठः।
2. केन पुनरुपायेनैनं विशसेम।

**क्रोष्टपालः**—जं आणवेदि अमच्चो[1] ( इति सपापपदातिर्निष्क्रान्तः )

( नेपथ्ये )

कक्ष्याभिः समरगजा रथास्तुरङ्गाः
पर्याणैर्जनहया भजन्तु योगम् ॥
आग्नेयं प्रचलतु यन्त्रजातमुष्ट्रैः
प्रस्थानं नृपपटवेश्मनः प्रवृत्तम् ॥ ३३ ॥

( उभौ सोत्कण्ठमाकर्णयतः ) ( पुनर्नेपथ्ये ) सम्प्रति हि दध्यक्षतदूर्वा-सिद्धार्थहस्ताभिः कन्याभिः कृतमङ्गलोपचारः,

युक्तः श्रुतिस्मृतिपुराणविविक्तमार्गैः
सत्कर्मभिः कुलपरंपरयागतैश्च ॥
सन्देशतः समरतूर्यनिनादमूर्च्छ-
त्क्रोधोऽधिरोहति रथं प्रधनाय धर्मः ॥ ३४ ॥

**व्यवहारः**—वत्स ! विजयाय प्रस्थितो देवः । प्रचलन्ति च स-मन्ततो दशदिक्पथेन महारथाः । तदावामपि तीर्थराजमुपेत्य शस्त्रधा-रातीर्थेनात्मानं कृतकृत्यतामापादयावः ।

( इति निष्क्रान्तौ )

इति श्रीमच्छुक्लभूदेवरचिते धर्मविजय-
नाम्नि नाटके चतुर्थोऽङ्कः ॥

१. यदाज्ञापयत्यमात्यः ।

## पञ्चमोऽङ्कः ।

( ततः प्रविशति प्रायश्चित्तम् )

प्रायश्चित्तम्——पाराकसान्तपनकृच्छ्रकषष्ठकाल-
चान्द्रायणैः सह महीवलयं क्रमेण ॥
कुर्वन्प्रदक्षिणमुपेत्य पुनः प्रयागं
कर्ताऽस्मि नाशमचिरादिव पातकानाम् ॥ १ ॥
कुरुक्षेत्रपरावृत्तः श्रुतवानस्मि लोकतः ॥
देवस्य न चिराद् वृत्तं सम्परायमरातिभिः ॥ २ ॥

तत्र कस्य जयः कस्य पराजयो वा कस्य च वीरशय्याशयनम् ?।

अपि च—

नाशौचमस्ति समरे विरतस्य बन्धो-
र्देशान्तरे च विहितं किल वर्णभेदात् ॥
साधारणञ्च तनयानपगाय शुद्ध्यै
स्नानं सचैलमपि तत्र विधेयमेव ॥ ३ ॥

समयश्चायं धार्मिकाणां जह्नवीस्नानोपगमस्य । सम्प्रति हि,

आच्छाद्यमानदृढतूलपटान्तराल-
संचारिशीतकृतवेपथुगात्रयष्टिः ॥
अन्तश्छदेन हिममापि निगूढपार्श्वा
वक्षः स्वयं विशति भर्तुरहो नवोढा ॥ ४ ॥

अपि च, कान्ताकुचोष्मदृढशीतभरोऽप्युरस्तः
संकोचयंश्चरणयोर्युगलं दरिद्रः ॥
संकीर्णतूलपटिकां वनितानितम्बा-
दाकर्षयन् स्वपिति माघनिशीथिनीषु ॥ ५ ॥

तेन कान्यकुब्जमुपेत्य गङ्गास्नानेन सह सङ्गम्याऽखिलवृत्तान्तमाक

१. वर्णदारात्, इति 'ख' पुस्तके पाठः।

लयिष्यामि । ( इति परिक्रामति )( पुरोऽवलोक्य ) अये प्रियमित्रमस्माकं गङ्गास्नानमित एवाभिवर्तते

( ततः प्रविशति गङ्गास्नानम् )

**गङ्गास्नानम्** —अहो महिमातिशयो भगवत्या भागीरथ्याः, यतः

तृष्णापयोनिधिविलंघनचञ्चुधैर्याः
संसारसागरकृतात्कटसेतुबन्धाः ॥
आचान्तवाङ्मयपयोनिधयोऽपि नित्यं
मज्जन्त्यगाधसलिले यतयोऽपि यस्याः ॥ ६ ॥

( विमृश्य च ) हनूमदेकसाध्ये रावणादिवधे रामस्येव भृत्यमात्र विधेयेऽपि कर्मणि दृश्यते क्वचित्प्रभूणामपि प्रवृत्तिर्यतो मयि सत्यपि अधर्मवधाय देवस्योद्योगः । अन्यथापि—

हिमशिखरिनितम्बानोकहद्रोहकर्त्री
पतितजनपवित्री भावसम्पादयित्री ॥
भवति यदि पृथिव्यां भीष्ममूभूतमवित्री
कथमिव न भवित्री निष्कृतिर्दुष्कृतानाम् ॥ ७ ॥

अपि च, विष्णुभक्तिपदप्राप्तिकामानां वीतरागाणामप्युपायः स्या द्देवी त्रिपथगेव । यतः—

व्यथितकलिमनर्थानर्थबीजं विहायो-
त्थितमजभवनान्तात्पाथसा पूरमन्यः ॥
पथि चरमपुमर्थप्रार्थनोत्कण्ठितानां
भवतु क इव सार्थः पार्श्वबन्धोः पुरस्य ॥ ८ ॥

प्रेषितश्चास्मि राज्ञा प्रायश्चित्तमाकारयितुं तत्कुत्र तस्य समागमो भविता ? । प्रतिपालयामि तावदत्रैव ।

( इति तिष्ठति )

**प्रायश्चितम्**—( उपसृत्य ) सखे ! कुतः सत्वरमिवागच्छसि ? ।

**गंगास्नानम्**--देवस्कंधावाराद् ।

( इति प्रणमति )

**प्रायश्चितम्**--(आलिङ्ग्य, अनामयप्रश्नपूर्वकं) तत्कथ्यतां तावद्विस्तरेण तत्रत्यो वृत्तान्तः ।

**गंगास्नानम्**--आर्य ! भवत्प्रस्थानसमयेऽत्रैव सन्धिविग्रहकुशलः कश्चिदुपेत्याऽधर्मदूतो राजानमवादीत् । यथा —

वर्णान्विहाय चतुरश्चतुराश्रमाणां
कर्माणि स्वत्वरमपास्य वनं प्रयाहि ॥
नो चेत्कृपाविमुखमाद्विशिखैर्विभिन्नः
संग्रामसीम्नि शयितासि वृतः शिवाभिः ॥ ९ ॥

**प्रायश्चितम्**--ततस्ततः ।

**गंगास्नानम्** —ततश्चैनदुपाकर्ण्य दृश्यतां दुष्टस्य दुर्वचोविलसितम् , अद्यैवास्मत्संमुखे पृथिव्यां वामनं भवितेति कृतसङ्कल्पश्च चतुरङ्गसेनामुपादाय देवोऽपि सत्वरं तीर्थराजमुपेयिवान् ।

**प्रायश्चित्तम्** —ततस्ततः ।

**गंगास्नानम्** —ततश्चापरेऽहनि दुर्वहदिनमणिगर्भभरालसायां नाकनायकककुभि परिणतायां कुरुपाण्डिमानमुपगतायामासन्नप्रसवपूर्वप्रसूनरजोधारयेव सन्ध्यया कलुषीकृताम्बरायां प्रचण्डतरमारुतान्दोलितोदयाद्रिद्रुमकुसुमकिञ्जल्करेणुपटलानुकारिणि प्रतिपक्षदानवकरनिर्मुक्तशस्त्रसहस्रसमुच्छलच्छोणितच्छटानुसारिणि प्रतिसरति समन्ततस्तरणीकिरणजाले, परेषामस्माकञ्च व्यूढसैन्यद्वयात्प्रथमतो निर्गत्य,

विधृतमसिसमूहं धूमधूम्रं वहन्तः
कनककटककान्तिज्वालया लेलिहानाः ॥
प्रलयकुपितवाह्निज्वानकल्पाः समन्ताद्
भुवनमिव दहन्तः पत्तय सन्निपेतुः ॥ १० ॥

**प्रायश्चित्तम्**— ततस्ततः ।

**गङ्गास्नानम्**—ततोऽश्ववाराः स्वगतीरुदाराः

प्रदर्शयन्तः परिवृत्य कुन्तान् ॥

उत्थाप्य वल्गाञ्चलपार्ष्णिघात-

प्रणुन्नवाहास्तरसाऽभिपेतुः ॥ ११ ॥

**प्रायश्चित्तम्**-- ततस्ततः ।

**गङ्गास्नानम्**—ततश्च,

अविदितमदधारादुर्दिनोड्डामरेभ्यो[1]

घनकटविकटेभ्यः[2] प्रौढदन्तावलेभ्यः ॥

अहितकरविमुक्तैर्गृध्रपत्रैः प्रणुन्ना-

स्तडित इव निपेतुः स्वर्णमय्यः पताकाः ॥ १२ ॥

अपि च, घनतरगिरिकूटस्पर्धिगन्धद्विपानां

पतदकृपकृपाणच्छिन्नकुम्भस्थलेभ्यः ॥

समररुधिरधाराः प्रस्रवन्त्योऽनुसस्रु-

र्जलभरमवतीर्णं गैरिकाधित्यकाभ्यः ॥ १३ ॥

**प्रायश्चित्तम्**— ततस्ततः ।

**गङ्गास्नानम्**— ततश्चास्मदीयैर्विशेषविक्रान्तैरितस्ततो व्यापाद्यमाने विपक्षे द्वन्द्वयुद्धे हिंसा ऽहिंसया ऽनृतं सत्येन स्तेयमस्तेयेनाशौचं शौचेनाऽनीन्द्रियनिग्रह इन्द्रियनिग्रहेण कार्पण्यं दानेन निर्दयता दयया क्रोधः क्षमया च व्यापादितः ।

**प्रायश्चित्तम्**-- ( सहर्षम् ) ततस्ततः ।

**गङ्गास्नानम्**-- ततश्च ।

भेरीबृहत्कमठपृष्ठलुठत्तरङ्गाः

कृत्तस्फुरत्करटिहस्तभुजङ्गभीमाः ॥

१. अविरतेति 'ख' पुस्तके पाठः ।

२. घनतटविकटेभ्यः, „ „

मत्स्यध्वजप्रचलमीनगणाः प्रसन्नः
कीलालतोयतरलाः परितस्तटिन्यः ॥ १४ ॥

**प्रायश्चित्तम्**--( सहर्षम् ) ततस्ततः ।

**गङ्गास्नानम्**—ततश्च क्रमेण प्रवर्तमाने महावैशसे, समररभसकृत्तगाढहठप्रतिपक्षभटारभटीविकटामितहाटककङ्कटकसङ्करघोरकटारविपाटितवैरिकपाटविशालभुजान्तरनिर्गतरक्तरटत्तटिनीतटनादितभूतकठोरकडाररटनातिभयानकमत्तगजेन्द्रघटाकटदाननवासवासवपानपटुप्राणनादिमिलिन्दीनिकटपृथुनर्दितरम्यसटापरिमण्डितघोटकघोषसमाकलनत्रुटिताहितपाटननटीकटाक्षविमोहितमाहासिकानकगोमुखकम्बुमिलत्पटहप्राणिनादविभीषणशत्रुभुजाघटनाबहुलम्पटखड्गनटोद्धटनाटकबन्धुममुद्धतयुद्धमुखद्रुतभग्नमधर्ममुपयिवान्सहसा नृपतिः ।

**प्रायश्चित्तम्**—ततस्ततः ।

**गङ्गास्नानम्**--ततश्च तरसाध्मातशंखः स्वयमवहारं विहाय चिरविप्रयुक्तो महाविद्यादर्शनाभिलाषी वाराणसीं पुनर्गन्तुकामस्त्वां प्रतिपालयन्निदानीं दशाश्वमेधिकं तीर्थमध्यास्ते ।

**प्रायश्चित्तम्**--तदेहि तावदावामपि देवं दिष्ट्या वर्धयावः ।

( इति निष्क्रान्तौ )

**गङ्गास्नानम्**—अयं नातिदूरे तीर्थराजः ।

**प्रायश्चित्तम्**— सत्यमेव ।

वेणीकच्छविलम्बमीनपतितं नेतुं वनं नन्दनं
यान्तीनां नवकौतुकोत्सवजुषां गीर्वाणवामभ्रुवाम् ॥
पारावारानतस्विनीसलिलयारुत्सन्नकोलाहलः
सम्भिन्नः श्रवणौ पुनाति यदयं लीलामृदङ्गध्वनिः ॥१५॥

१. उत्तालकोलाहलैः, ,,

**गङ्गास्नानम्**--आर्य ! समुपागत एव प्रयागः । यत्र—

सोऽयं वटः प्रलयबन्धुरनादिपुंसः
प्रस्वापसंस्तरसमाश्रयबालपत्रः ॥
अद्यापि पद्मनयनप्रभयेव बाढं
श्यामः परान्नयनयोर्मुदमातनोति ॥ १६ ॥

**प्रायश्चित्तम्**--सखे ! पश्य पुरस्तात्तीर्थराजोऽयं तथैतद्दशाश्वमेधिकमयश्च कवितयोपश्लोकितो राजा शुभासनगतस्तदेहि सितासितयोः सङ्गमे जपाह्निकादिकं विधाय पराह्ण एनं दिदृक्षावः ।

( इति निष्क्रान्तौ )

॥ शुद्धविष्कम्भः ॥

---

( ततः प्रविशति राजा कविता विभवतश्च परिवारः )

**कविता**—महाराज !

जानुदघ्नसलिलाः पुरस्कृत-
प्रेयसीनयनवारिपूरणात् ॥
दुस्तराः किल भवन्ति सिन्धव-
स्त्वद्भयद्रुतविरोधिभूभुजाम् ॥ १७ ॥

सर्वदैव च स्वयमेव,

बाणभिन्ननिजभालसंस्थितां
वीक्ष्य खड्गमुकुरे विधेर्लिपिम् ॥
राज्यभोगविनिवृत्तमानसाः
शत्रवो विमुखतां भजन्ति ते ॥ १८ ॥

**राजा**--देवि ! वयं तावद्वर्तमानं जनताचारित्रमात्रं श्रोतुकामाः, तदस्मद्विषयेऽर्थवादमपहाय यथानुभवं वर्णय ।

**कविता**--देव ! सर्वमेवैतत्ते भूतार्थवर्णनं न तु स्तोत्रम् । सम्प्रति हि—

जरा द्विजघ्नी मधुपो मिलिन्दः
सुवर्णहारी वनिताङ्गवर्णः ॥
पटः पृथिव्यां गुरुतल्पगामी
त्वयि प्रभो ! शासति दुर्विनीतान् ॥ १९ ॥

अपि च, वक्षोभुवोऽतिकठिनाः कुटिलाः कटाक्षाः
कर्णेजपा नयनपङ्कजखञ्जरीटाः ॥
केशा नितान्तमलिना गतयोऽथ मन्दाः
वामभ्रुवामधरसङ्गतयश्च हासाः ॥ २० ॥

( राजा गुरुतरलज्जाभरनमितशेखरस्तूष्णीमास्ते )

( नेपथ्ये ) इदो इदो ।

( सर्वे समाकर्णयन्ति )

कविता—राजन् !

हिंसा यज्ञे संस्कृतानां पशूनां
स्पर्धा विद्याकामुकानां बटूनाम् ॥
क्रोधः क्रीडद्बालकानां गुरूणां
शिष्याणाञ्चाध्यात्ममार्गे विवादः ॥ २१ ॥

राजा—प्रियवादिनि ! त्वदीयप्रतिभाप्रागल्भ्याकृष्टचेतसः सुजनस्वास्थ्यविषये कांश्चित्प्रश्नानेकसन्दर्भेण पृच्छामः । यथा—

पूर्तौ वाचिकमव्ययं किमथ किं तैलाय निष्पीड्यते-
त्पातालस्य च नाम किं किमु जलं मुष्णाति नान्दीमुखम् ॥
कीदृक्कीदृशमौक्तिकं बहुधनं वज्रं च कीदृक्शुभं
कीदृङ् मृण्मयमालयं च कृपणस्याथाम्बरं कीदृशम् ॥ २२ ॥

अपिच, कः शब्दोऽधिकवाचकः किमु भवेत्सम्बोधनं निर्द्धने
किं वा पार्थिवबीजमाशु गरुडस्योत्सर्पणं कीदृशम् ॥
कीदृक् संयमिनां च लुब्धचरितं कीदृग् दरिद्राङ्गणं
कीदृक्कीदृगधो भुवश्च भवनं चेतः सतां कीदृशम् ॥ २३ ॥

कविता—अति विमलम् ।

( पुनर्नेपथ्ये )

इदो उवसप्पन्दु देवीओ । एसो विपक्खहत्थपज्जत्थतिक्खसत्थ-सहस्ससंक्खोहिदगत्तबन्धोवि णिअपोलुसमहप्पेण अणुज्झिअसमत्थण-किलिसितकलेवरो वि सहाविअकान्तिपच्चारसोहग्गमहुरेण मुहपुण्डरीएण समुब्भासिओ वज्जी विअ समुब्भासिअसभाप्पदेसो मुणिअणसलाह-णिज्जचरिदो जण्हईतरङ्गसीअलेहिं वादेहिं णिवात्तिदसमरपालिस्समो कविदाए उपासिज्जंतो महाराओ इदो सिंघविट्ठरं अलंकरेदि ।

राजा—महाविद्यानामवसरदर्शनार्थं प्रेषितस्य प्राकृतस्येव भाषितं श्रूयते ।

( पुनर्नेपथ्ये )

सख्यः ! सुतरामेवं घटते यद्विजयिनं राजानमुपेत्य स्वयमेव दिष्ट्या वर्धयामः । अपिच, अयम्,

यत्सर्वथा विनयविभ्रमभारमौलि-
रस्मत्सकाशमुपयात्युचितं तदस्य ॥
युक्तं पुनः समरविक्षतगात्रयष्टि-
र्वत्सोऽधुना स्वयमुपेत्य विलोकनीयः ॥ २४ ॥

कविता—देव ! प्राकृतेन सह विद्या अपि समुपागता इति लक्ष्यं । यदयं व्यवहारविदामग्रेसराया अलङ्कारविद्याया इवाकर्ण्यते श्लोकः ।

१. इत उपसर्पन्तु देव्यः । एष विपक्षहस्तपर्यस्ततीक्ष्णशस्त्रसहस्रसंक्षोभितगात्रबंधोऽपि निजपौरुषमाहात्म्येनानुज्झितसमर्थत्वाक्लिष्टकलेवरोऽपि स्वाभाविककान्तिप्रचारसौभाग्यमधुरेण मुखपुण्डरीकेण समुद्भासितो वज्रीव समुद्भासितसभाप्रदेशो मुनिजनश्लाघ्यचरितो जाह्नवीतरङ्गशीतलैर्वातैर्निर्वर्तितसमरपरिश्रमः कवितयोपास्यमानो महाराज इतः सिंहविष्टरमलङ्करोति ।

२. यत्सर्वथा विनयभारविनम्रमौलिरिति 'ख' पुस्तके पाठः ।

राजा—किन्न पश्यसि पुरः समुपागता एव पूर्वपक्षोत्तरपक्षैर्बहुलतरं तन्त्रं दर्शयन्त्यः सर्वाः ।

( ततः प्रविशति समं विद्याभिः प्राकृतम् )

प्राकृतम्—णं कहं ण सलाहिज्जई तिहुअणतिलओ एसो राएसि ।

पाआलमज्झम्मि बलिप्पिआणं
णलप्पिआणं पहुवीतलम्मि ॥
सग्गम्मि वग्गो सुलसुन्दलीणं
गाअंदि गोराइं जसाइं जस्स ॥ ७५ ॥

अलङ्कारः—अयमीदृश एव महानुभावो येन संग्रामाङ्गणभवने परमप्रतापहुतवहसाक्षिकं पाणिगृहीतमात्रेव.

दृषत्कठोरापि शिरीषकोमला
श्यामाऽपि गौरी तरलाऽपि सुस्थिराम् ॥
नृशंसरूपाऽपि सदा मनोहरा
सकीर्तिकन्या सुषुवे कृपाणिका ॥ ७६ ॥
कालः प्रलम्बस्तरलोऽतिवक्रगः
क्रूरान्तरः कोशबिले प्रियस्थितिः ॥
विरोधकृत्प्राणसमीरणाशनः
खड्गो यदीयः कुटिलो भुजङ्गमः ॥ ७७ ॥

( इति परिक्रामति )

राजा—गृह्यसूत्र ! आदिश्यतां तावत्पारम्कराचार्यः समधुपर्कमर्घ्यमादायोपतिष्ठत्विति ।

सूत्रम्—यदाज्ञापयति देवः ( इति निष्क्रान्तः । )

१. ननु कथन्न श्लाघ्यते त्रिभुवनतिलक एष राजर्षि ।
पातालमध्ये तु बलिप्रियाणां नरप्रियाणां पृथिवीतले च ।
स्वर्गे च वर्गः सुरसुन्दरीणां गायन्ति गौराणि यशांसि यस्य ॥

( उपसृत्य प्राकृतम् ) महाराज ! एसा विसेसदंसिणीणं पढमा विज्जा तुमं सहाजेदि[1] ।

राजा—( ससम्भ्रममासनादुत्थायाञ्जलिं बद्ध्वा )

द्रव्यैर्गुणैर्विविधकर्मभिरर्चनीया-
सामान्यकान्तिसरणिः किरणावलीभिः ।
लोके विशेषविदिता ऽयुतसिद्धरूपा
भावप्रलोभितपतिर्जननि ! त्वमेव ॥ २८ ॥

( इति प्रणमति )

विद्या—सिसृक्षया समुत्पन्नं लीयते संजिहीर्षया ।
यस्य पाता त्रिजगतः स देवः सुखदोऽस्तु ते ॥२९॥

प्राकृतम्—देव ! एसा अक्खवादसलाहणिज्जा विज्जा, णं पणमदु महाराओ[2] ।

राजा—पातिव्रत्ये ! प्रणामं चरणसरसिजं भर्तुरेव प्रमेयं
जल्पः स्वल्पः सुजातैरवयवकलना नो परेषां कदाचित् ।
नो दृष्टः कापि वादश्छलगतिरहितं किञ्च यस्याश्चरित्रं
दृष्टान्तो न्यायभाजामिति जननि भवत्यादृता गौतमेन ॥३०॥

( इति शिरसि अञ्जलिं घटयति )

विद्या—प्राग्भवयोगपरमाणुगुणाक्रियाभि-
र्ज्ञानेषणाकृतिविडम्बितकार्यकर्ता ।
क्षित्यङ्कुराद्यनुमितः समुपास्यते यः
श्रेयः स ते दिशतु विश्वगुरुर्महेशः ॥ ३१ ॥

देव ! इयमस्मदुपास्या त्वत्सभाजनाय,

सालङ्कृतिर्गुणवती च विलीनदोषा
चेतोऽञ्जनेन विदुषामपि रञ्जयन्ती ।

१. महाराज ! एषा विशेषदर्शिनीनां प्रथमा विद्या त्वां सभाजयते ।
२. देव ! एषाऽक्षपादश्लाघनीया विद्या, एनां प्रणमतु महाराजः ।

शृङ्गारहास्यकरुणादिरसैः समेता
सा भारती भरततापसमान्यमूर्तिः ॥ ३२ ॥

( राजा दण्डवत्प्रणमति )

विद्या—महाकाव्यसमुत्पन्नमनोवृत्त्या विनाशिते ।
अज्ञानांशे समुत्पन्नोऽव्यादात्मा त्वां रसात्मकः ॥ ३३

प्राकृतम्—महाराअ ! एसा देवहूदीहिअअप्पसूदस्स तावसस्स माणणीआ कावि विज्जा[2] ।

कविता—हस्तारविन्दचरणाधररक्तवर्णा[1]
रोमावलीचिकुरपाशकटाक्षकृष्णाम् ।
दन्तद्युतिस्मितसमाश्रितशुक्लशोभां
विद्या नमस्व नृपते ! प्रकृतिप्रगल्भाम् ॥ ३४ ॥

राजा—( सहर्षम् ) यामेनाम्—अजामेकां लोहितशुक्लकृष्णां जनयित्रीं जनानामिति स्तुवन्ति कापिलाः । ( इति प्रणमति )

विद्या—संस्कारकृत्यविमुखः किल चेतनोऽपि
निर्लेप एव समुपाश्रितभोगबुद्धिः ।
नो वा महान्न गुणवानपि यस्तथापि
विश्वैकवन्द्यचरणः शरणं स ते ऽस्तु ॥ ३५ ॥

कविता—स्वामियं दिष्ट्या वर्धयति,
मैत्र्यादिशुद्धहृदया श्रितमत्समाधि-
नासाग्रदृष्टिनयना विमलासनस्था ॥
क्लेशासहेश्वरपरा विधृताक्षमाला
हृद्या ऽनवद्यचरिता नृप योगविद्या ॥ ३६ ॥

१. स्फुरन्नते इति 'ख' पुस्तके पाठः ।

२. महाराज ! एषा देवाहूतीहृदयप्रसूतस्य तापसस्य माननीया कापि विद्या ।

३. एषा महश्वेरा, इति 'ख' पुस्तके पाठः ।

राजा--देवि ! महायोगिभिरुपास्यमानं ते पादपद्मं प्रणमामि ।

विद्या — नौलीकर्मविशुद्धसर्वविवरान्मन्दोच्छ्वसन्मारुतै-
मूलाधारविलीनकुण्डलिनिकामाकृष्य मूर्ध्नि स्थिते ।
ध्येयः पङ्क्तिशतारभाजि जलजे भव्याय भूयाद् गुरु-
र्ज्ञेयः षोडशपत्रहृत्सरासिजे पायात्पुराणः पुमान् ॥३७॥

कविते ! वीक्ष्यताम्[1] ।

प्रभाकराकीर्णमुखारविन्दा
भट्टोपविष्टा ऽद्भुतदर्शनश्रीः ।
सत्कर्मसक्ता पुरुषे परस्मि-
न्न चाऽनुरक्ता ननु भारतीयम् ॥ ३८ ॥

राजा--(सप्रश्रयमञ्जलिं बद्ध्वा)

न्यायानपेते पतिदेवताना-
मविग्रहे ऽप्याग्रहमादधाने ।
विध्यर्थवादाकुलितान्तराले
नमामि बाले ! तव पादपद्मम् ॥ ३९ ॥

विद्या--एकस्मादपि जातानां यद्वैचित्र्येण देहिनाम् ।
वैचित्र्यं सुखदुःखेषु स विधिस्ते सुखावहः ॥ ४० ॥

कविता--द्वैतध्वान्तनिवारणैकतरणिः प्रौढप्रभाधोरणि-
र्विश्वेषामपवर्गमार्गसरणिर्ज्ञानाग्निमन्थारणिः ॥
विद्या धीवरधीवराधिपसुता कानीनवक्त्रोद्गता
भूपालेन्द्र ! सभाजनाय भवतः प्राप्तेयमालोक्यते ॥४१॥

प्राकृतम्--बह्मविज्जाए उपासणं करेदु[2] देवो ।

राजा—महनीयमूर्तिममूर्तानुरागां रागादिभिरकवलितां त्वां

१. आलोक्यताम्, इति 'ख' पुस्तके पाठः ।
२. ब्रह्मविद्याया उपासनां करोतु देवः ।

चिरमारभ्य द्रष्टुमुत्सुकोऽस्मि । यतः,

जरठाप्यसती विमुक्तसङ्गं
पुरुषं स्वीयगुणप्रदर्शनेन ।
अनुरञ्जयति प्रसह्य यत्तां
भवती कापि तिरस्करोति मायाम् ॥ ४२ ॥

( इति पादयोः पतति )

**विद्या**—श्रोत्रेक्षणादिकरणैर्विकलोऽपि बुद्ध्या
शून्योऽपि धर्मरहितोऽपि न सक्ततोऽपि ॥
कूटस्थतामपि भजन्नपि मायिको यः
साक्ष्येक एव जगतः सुखदः स ते़ऽस्तु ॥ ४३ ॥

**प्राकृतम्**—इदो इदो आसणाइं उवविसदु देवीओ ।

**अलंकारः**—वत्स ! महाराष्ट्रविषये सङ्गतानामष्टादशस्मृतानामयं सन्देशः ।

**राजा**—किमाज्ञसमस्माभिः ? ।

**विद्या**—वत्सभाजनोचितेऽपि समये यदस्माकं विलम्बः स कर्मविपाकं पुरस्कृत्य वर्णाश्रमनियन्त्रणार्थमेवेति वत्सेनावधानव्यम ।

**राजा**—( सहर्षं ) यदस्माभिर्विधातव्यं देवीभिस्तत्स्वयं कृतम ।
अभूतः पक्षपातोऽयं भूयानयमनुग्रहः ॥ ४४ ॥
कियत्सम्पादितं मातृभिः कर्मविपाकेन च ।

**विद्या**—वत्स किं सम्पादनीयं पामरस्तु पामर एव । परन्तु,
शास्त्राण्यधीत्य विविधानि गुणानुरूपा

१. चेतः इति 'ख' पुस्तके पाठः ।
२. शरणमिति 'ख' पुस्तके पाठः ।
३. इत इत आसनान्युपाविशन्तु देव्यः
४. अपूर्वः, इति 'ख' पुस्तके पाठः ।
५. गुरूनुपास्येति 'ख' पुस्तके पाठः ।

ज्ञात्वाऽपि दुःखसरणीर्नरकप्रभूताः ॥
गाढानुरागकवलीकृतकुत्सचित्ताः[1]
पापस्य तत्परिणतीरपि[2] न स्मरन्ति ॥ ४५ ॥

तथाऽपि महाभयप्रदर्शनेन शनैःशनैर्हस्तगतप्रायोऽसौ लोकः सर्वोऽपि

**राजा**--तत्किं तद्भयप्रदर्शनम् ? ।

**विद्या**--निरये निपतन्त्यधर्मिण-
स्तरुगुल्मादिषु सम्भवन्त्यथ ॥
पशुपक्षिषु संसरन्त्यथो
मनुजानामुदरे ततः परम् ॥ ४६ ॥

तत्र च प्राक्तनकर्मयोगेन,
दुर्दर्शनाः केचन केऽपि दुर्भगा
स्तोत्रामयग्रस्तकलेवराः परे ॥
व्यङ्गा दरिद्रा विकलास्तथेन्द्रियै-
र्न सङ्गताः केऽप्युपसर्गमन्थराः ॥ ४७ ॥

**राजा**—ततस्ततः ।

**विद्या**--ततश्चैतावदाकर्णनमात्रेण सर्वेऽपि सत्रासाः पूर्वकृतदुष्कृते सानुशयाः सर्वथैव विमुच्यमधर्माद्विजन्तस्तदनुशासनं प्रमाणयन्ति । विलीनस्य त्वद्गतेनोपलभ्यते वार्ताऽपीत्येतदाकलय्य वत्सः प्रमाणमिति ।

**राजा**—नास्मात्परं विधेयमस्ति ।

**सर्वाः**--वत्स ! इदानीमसि कृतकृत्यस्तद्भगवदुपासनयैव नीयतामयं समयः ।

**राजा**--उपदिशन्तु भवत्यः ।

१. मदृचिन्ताः इति 'ख' पुस्तके पाठः ।
२. तत्परिणतिरिति 'ख' पुस्तके पाठः ।

**विद्याः**--कर्तारं भज यज यँज्ञमूर्तिमित्थं
जानीहि प्रकृतिविभिन्नमादिदेवम् ॥
मिथ्यैतत्त्वयि लसति प्रपञ्चजालं
सर्वात्मञ्जगति पुनस्त्वमेक एव ॥ ४८ ॥

**राजा**--देव्यः ! नानाविद्याराधनश्रवणेन व्याकुलीकृतो ममान्तरात्मा ।

( नेपथ्ये )

राजन् ! सर्वाणि शास्त्राणि नमस्कृत्य विसर्जय ॥
भज पर्वतजाकान्तमेकान्तं परिशीलयन ॥ ४९ ॥

( सर्वा समाकर्णयन्ति )

**विद्याः**--वत्स ! सम्यगुक्तमुपासनया ।

**राजा**—( साञ्जलिबन्धम् ) देवि ! एतद्वचनेऽपि मम नैव सन्देहः ।

**विद्या**—किमिति प्रमुग्धोसि, सर्वासामस्माकमेक एवाशयः ।

यो मन्त्रमूर्तिरथ य प्रकृतेर्विभिन्नः
कर्ता च यस्त्रिजगतामथ यस्तुरीयः ॥
विष्णुर्विरिञ्चिरिति यः कथितः पुराणैः
सोऽयं हिमाचलसुताहृदयाधिनाथः ॥ ५० ॥

( नेपथ्ये )

राजन् ! एवमेतत् ।

असहन्नपि शब्दवाच्यता
समुपास्यो ऽयमनेकनामभिः ॥
विविधास्वभिधास्वमुष्य य-
द्विवदन्ते विबुधा न वस्तुनि ॥ ५१ ॥

१. मन्त्रमात्रमूर्ति, इति 'ख' पुस्तके पाठः ।
२. 'असहमान' इत्युचितम् ।

विद्या--वत्स ! ध्यायतां भगवान्भूतभव्यभवन्नाथः ।

अर्धाङ्गे कुवलयलोचनां दधानः

प्रालेयस्फटिकधराधरोद्भटाभः ॥

उद्दामद्युतिशशिखण्डमण्डनश्री-

श्चित्तान्तर्विलसति यः पुमान् पुराणः ॥ ५२ ॥

राजा--( प्रणिधानं नाटयति ) ( नेपथ्ये )

वत्स ! पूजयस्त्वोपचारैर्मानसैः परमेश्वरम् ।

राजा--( एकाग्रचित्तं पुनर्ध्यात्वा )

उत्सर्पिदर्पगुणभीषणहारसर्प-

नासापुटैर्विकटसंकुचितैर्निपीतः ॥

पाटीरकुङ्कुममिलन्मृगनाभिबन्धु-

र्गन्धः सदाशिव मया मनसार्पितस्ते ॥ ५३ ॥

अपि च, गुञ्जन्मधुव्रतघटोद्भटपक्षवात-

व्राताभिघातरभसप्रसरत्परागम् ॥

संकल्पकल्पितमतर्कितगन्धधाम

मन्दारदाम तव पादयुगेऽर्पयामि ॥ ५४ ॥

अपि च, गङ्गां जटान्तरगतामपि द्रष्टुकामः

श्यामप्रवाह इव वासरभर्तृजायाः ॥

उत्पातकेतुरिव मोहभरस्य धूपः

श्रीविश्वरूप ! हृदयेन मया कृतस्ते ॥ ५५ ॥

अपि च, यत्कान्त्यलाभविवशो नु रविः सतापः

पापः क्रमाद्भवति पूर्णनिशाकरोऽपि ॥

१. फण इति 'ख' पुस्तके पाठः ।

२. परागम्, इति 'ख' । पुस्तके पाठः ।

दीपः पुरस्तव भवार्णवकर्णधार !
संसारदीप रचितः स मनोरथेन ॥ ५६ ॥

अपि च, माधुर्यसम्पदवधीरितमौधवर्ग-
मन्त्रात्मुज्ज्वलमनेकविधं विधातः ! ॥
स्वान्तेन शान्तिकलितेन कृतं निबद्धं
विद्यैकगम्य ! परितोषकरं तवास्तु ॥ ५७ ॥

( नेपथ्ये )

प्रणम्यतां परमेश्वरः ।

**राजा**—( अञ्जलिं बद्ध्वा )

लक्ष्मीविलासकमलासननाकिनाथ-
मानम्रमौलिमणिदीधितिधोरणीभिः ॥
नीराजितं त्रिजगदेकगुरोर्नमामि
दाक्षायणीसहचरस्य पदारविन्दम् ॥ ५८ ॥

**विद्या**—वत्स ! वयं तावदेतैः तव सुचरितैः सन्तुष्टाः स्मः, व्रियतां तावदभीप्सितम् ।

**राजा**—देवि ! इदानीं दर्शनादेव फलितमनोरथोऽस्मि । यतः-

युष्मत्प्रसादवशतः प्रियमस्तनस्मे
यातः क्षणात्क्षयमशेषविपक्षपक्षः ॥
साक्षात्कृतौ स्फुरति दक्षसुताधिनाथः
क्षोणीभृदावृततला वशगा क्षमा च ॥ ५९ ॥

तथाऽपीदमस्तु ।

आयासाद्वामुदेवोऽवतु भवतु भवो भव्यदः पद्मिनीना
प्राणाधीशः प्रियाणि प्रथयतु हरतादिघ्नराशिं गणेशः ॥
हन्यात्कन्या हिमाद्रेः कलिमलमखिलं किञ्च वर्णाश्रमाणां
श्रौतस्मार्तैकनिष्ठा हरिहरपदयोर्भक्तिरव्याहताऽस्तु ॥ ६० ॥

**विद्या**—वत्स ! जगत इव तवापीयमाशीः । यथा,

विष्णुर्व्यापकतां ददातु जगतामैश्वर्यमीशो गिरे-
स्तेजस्तत्त्रिकरस्तनोतु विपुलं शक्तिश्च शक्तिं पराम् ।
विघ्नं विघ्नहरो हरत्वविरतं रात्रीशखण्डोल्लस-
द्भाले भक्तिरचञ्चलास्तु भवतो देवे च लक्ष्मीपतौ ॥ ६१ ॥

**राजा**—पुनः काशीदर्शनकामुकोऽस्मि यदि भवेदभिमतं भवतीनाम् ।

**विद्या**—तदेहि वत्स ! सहैव तावत्साधयामः ।

( इति निष्क्रान्ताःसर्वे )

इति श्रीमद्भूदेवशुक्लरचित धर्मविजयनाम्नि नाटके पञ्चमोऽङ्कः ।

इति धर्मविजयन्नाम नाटकं समाप्तम् ।

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M A

No. 1 -The Kiranāvali Bhāskara, a Commentary on Udayana's Kiranavalī, Dravya section, by Padmanābha Miśra.
Ed with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No 2 -The Advaita Chintāmani, by Rañgoji Bhatta,
Ed with Introduction etc. by Nārâyana S'āstri Khiste Sahityacharya. Rs. 1-12

No 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāndeya Vyākaranacharya. Rs. 1-12

No 4—The Kusumañjali Bodhanī, a Commentary on Udayana's Theistic Tract Nyaya Kusumāñjali, by Varadarāja.
Ed with Introduction etc by Gopinath Kaviraj, M.A. Rs. 2-0

No 5 - The Rasasara a Commentary on Udayana's Kiranāvalī, Guna Section, by Battta Vadīndra
Ed with Introduction etc by Gopīnath Kaviraj, M.A. Rs. 1-2

No 6 - Part I) The Bhavana Viveka by Mandana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed with Introduction etc by M M. Gaṅgānātha Jha, M A, D Litt. Rs. 0-12

No 6 (Part II) Ditto Ditto Rs. 0-12

No 7 Part I The Yoginihrdaya dīpikā, by Amrtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vamakeśvara Tantra
Ed with Introduction etc by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7 (Part II) Ditto Ditto Rs. 1-4

No 8—The Kavyadākinī, by Gaṅgānanda Kavīndra.
Ed with Introduction etc by Jagnnātha S'āstri Hoshing Sahityopadhyāya Rs 0-10

No. 9—(Part I)-The Bhakti Chandrika, a Commentary on S'āndilya's Bhaktisutras, by Narayaṇa Tirtha
Ed with a Prefatory Note by Gopinath Kaviraj, M A. Rs. 0-15

No 10-(Part I)-The Siddhantaratna, by Baladeva Vidyabhūsana
Ed with a Prefatory Note by Gopinath Kaviraj, M A Rs. 1-2

No. 10-(Part II)—Do Do. Rs. 2-12

No. 11-The Sri Vidya Ratna Sutras, by Gaudapada, with a Commentary by S'ankarāranya.
Ed. with Introduction etc. by Nārayana S'āstri Khiste Sāhityāchārya Rs 0-9

No 12-The Rasapradipa, by Prabhakara Bhatta.
Ed with Introduction etc. by Narayana Sastri Khiste Sahityacharya Rs 1-2

No 13 The Siddha Siddhanta Sangraha by Balabhadra.
Ed with Introduction by Gopinath Kaviraj, M A Rs 0 14

No. 14-The Trivenika by Aśādhara Bhatta
Ed with Introduction by Batukanatha Sarma Sahityopadhyāya, M. A and Jagannatha Sastri Hoshing Sahityopadhyaya Rs 0-14

No 15-(Part I)-The Tripurarahasya (Jñana Khanda)
Ed with a Prefatory Note by Gopinath Kaviraj, M A. Rs. 0-14

No 15-(Part-II)—Do Do Rs. 2-4
No 15 (Part III) Do Do Rs 2 0

No. 16 The Kavya Vilasa by Chiranjiva Bhattacharya
Ed with Introduction etc by Batukanatha Sarma Sahityopadhyaya, M A and Jagannatha Sastri Hosing Sāhityopādhyaya Rs 1-2

No 17-The Nyaya Kalika, by Bhatta Jayanta
Ed with Introduction by M M Ganganatha Jhā M A, D Litt Rs 0 14

No. 18–(Part I)-The Goraksa Siddhānta Sangraha.
Ed with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19 (Part I)-The Prakrita Prakāśa by Vararuchi with the Prākrita Sanjīvanī by Vasantarāja and the Subodhinī by Sadānanda
Ed. with Prefatory note etc. by Batuk Nath S'arma, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–(Part II) Ditto Ditto Rs 2–12

No. 19–(Part III) Introduction etc (In Preparation.)

No. 20 The Mansatattvaviveka by Viśvanātha Nyāyapanchānana Bhattacharya
Edited with Introduction etc. by P. Jagannātha S'astri Hoshing Sahityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares Rs. 0–12

No. 21 (Part I) The Nyaya Siddhānta Māla by Jayarāma Nyāya Panchānana Bhattachārya.
Edited with Introduction etc. by Mangal Deva S'astri M. A., D. Phil (Oxon), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–(Part–II) Ditto Ditto Rs. 2–0

No. 22-The Dharmanubandhi S lokachaturdaśi by S ri S'esa Kṛṣṇa with a Commentary by Rama Pandit
Edited with Introduction etc. by Nārāyana S'āstri Khiste Sahityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23–Navaratrapradipa by Nanda Pandit Dharmādhikārī
Ed with Introduction etc. by Vaijanātha S'astrī Varakale, Dharmasastra-S'astrī, Sādholal Research Scholar, Sanskrit College, Benares, with a Foreword by P Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24-The S ri Rāmatāpinyopanisad with the Commentary called Rāma Kaśikā in Purvatapinī and Anandanidhi in Uttaratāpinī by Anandavana

Ed with Introduction etc by Anantarama Sastri Vetala Sâhityopadhyaya, Post-Acharya Scholar, Govt Sanskrit College, Benares, with a Foreword by Pandit Gopi Natha Kaviraja, M A, Principal, Government Sanskrit College, Benares Rs 3-12

No 25-The Sapindyakalpalatika by Sadasivadeva alias Apadeva with a commentary by Narayana Deva

Edited with Introduction etc by Jagannatha Sastri Hosinga, Sahityopadhyaya, Sadholal Research Scholar, Govt Sanskrit College, Benares Rs 1-4

No. 26-The Mrgankalekhā Natikā by Visvanātha Deva Kavi

Edited with Introduction etc by Narayana Sastri Khiste Sāhityacharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs 1 0

No. 27-The Vidvacheharita Panchakam By Narayana Sastri Khiste, Sâhityacharya, Assistant Librarian, Govt Sanskrit College, Library, Sarasvati Bhavana, Benares With an Introduction by Gopinath Kaviraja, M A, Principal Govt Sanskrit College, Benares Rs 2 0

No. 28-The Vrata Kosa by Jagannatha Sastri Hosinga Sahityopadhyaya, late Sadholal Research Scholar, Sanskrit College Benares With a Foreword by Sri Gopinatha Kaviraja, M A, Principal, Govt Sanskrit College, Benares Rs 4-0

No 29 The Vrttadipaka By Mauni Sri Krsna Bhatta

Edited with Introduction etc by Pt Gangadhara Sastri Bharadvaja, Professor, Govt Sanskrit College, Benares.

No. 30-The Padartha Mandanam By Sri Venidatta

Edited with Introduction etc by Pandit Gopala Sastri Nene, Professor, Govt. Sanskrit College, Benares

No. 31 (Part I) The Tantraratna by Partha Sarathi Misra

Edited by M M. Dr Ganganatha Jha, M A D Litt, Vice-Chancellor, Allahabad University, Allahabad.

No. 32-The Tattvasara by Rakhaldasa Nyayaratna,

Edited with Introduction etc by Harihara Sastri, Benares Hindu University.

No. 33-The Nyaya Kaustubha (Part I) by Mahadeva Puntamkar.

Edited with Introduction etc by Umesa Misra, M. A. Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānatha Jha

(b) The View-point of Nyaya Vaisesika Philosophy, by Gopinath Kaviraj.

(c) Nirmana Kaya, by Gopinath Kaviraj. Rs 1–12

Vol II—

(a) Parasurama Misra alias Vani Rasala Raya, by Gopinath Kaviraj

(b) Index to Sabara's Bhasya, by the late Col G. A. Jacob.

(c) Studies in Hindu Law (2)—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sutra, by Gopinath Kaviraj

(e) The System of Chakras according to Goraksa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka natha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vira Saiva Philosophy, by Gopinath Kaviraj

(j) Nyaya Kusumañjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Narayanā S'āstri Khiste.

(l) Sondala Upadhyaya, by Gopinath Kaviraj. Rs. 5

Vol III—

(a) Index to Sabara's Bhasya, by the late Col G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure, by Gaṅgānatha Jha

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśesika Literature, by Gopinath Kaviraj

(e) Naisadha and S'ri Harsa by Nilakamala Bhattāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar Rs 5

Vol IV—

(a) Studies in Hindu Law (4) Judicial Procedure: by Ganganātha Jha

(b) History and Bibliography of Nyaya Vaiśeṣika Literature, by Gopinath Kaviraj

(c) Analysis of the Contents of the Ṛgveda–Pratisakhya, by Maṅgala Deva Sastri

(d) Narayana's Ganita kaumudī, by Padmakara Dvivedi

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkaryavada (Causality) in Sankhya by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha

(h) History of the origin and expansion of the Aryans, by A. C. Ganguly

(i) Punishments in Ancient Indian Schools, by G. L. Sinha Rs. 5

Vol V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Ramayana, by Manmatha natha Roy

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittiriya & Atharvaveda Pratisakhyas, by Mangala Deva Sastri.

(e) Formal Training and the Ancient Indian Thought, by G. L. Sinha

(f) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.

(g) A Descriptive Index to the names in the Ramayana, by Manmatha natha Roy

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj Rs. 5

Vol. VI—

(a) Index to S'abara's Bhasya, by the late Col. G. A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nâthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha natha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinatha Kaviraj.

(f) Notes and Queries, by Gopinatha Kaviraj.

Vol. VII.

(a) Bhamaha and his Kavyalankara, by Batukanatha S'arma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vais'esika Sutras, by Gopinatha Kaviraj

(c) History and Bibliography of Nyâya Vais'esika Literature, by Gopinātha Kaviraj.

(d) An attempt to arrive at the Correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāsya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopināthа Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term Parārdha, by Umes'a Misra.

Vol VIII. ( In progress )

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Ramayana, by Manmatha Nath Roy.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.